# मीमांसा-शाबर-भाष्यम्

## आर्षमत-विमर्शिन्या हिन्दी-व्याख्यया सहितम्

(षष्ठो भागः)



युधिष्ठिरो मीमांसकः

आचार्य-शबरस्वामि-विरचितम्

# जैमिनीय-मीमांसा-भाष्यम्

आर्षमत-विमर्शिन्या हिन्दी-व्याख्यया सहितम्

[षष्ठो भागः]



व्याख्याकारः—

युधिष्ठिरो मीमांसकः

# भूमिका

मीमांसा-शाबर-भाष्य की 'आर्षमतविमर्शिनी' हिन्दी व्याख्या का पांचवां भाग सं० २०४३ के अन्त (मार्च १९८६) में पूरा हुआ था। इस भाग अर्थात् अ० ६ के दो तिहाई भाग की व्याख्या लिखने के अनन्तर दाहिने कन्धे और दाहिने बाजू में पीड़ा आरम्भ हुई और वह उत्तरोत्तर बढ़ती चली गई। इस कारण एक तिहाई भाग की व्याख्या को पूरा करने में बहुत समय लग गया। इसी काल में दाहिना कन्धा जाम हो गया और बाजू में अत्यधिक पीड़ा होने के कारण ५वें भाग (अ० ६)के अनन्तर मीमांसा-भाष्य व्याख्या का लेखन कार्य स्थगित हो गया।

**धर्मपत्नी का वियोग**—मैं अनेक क्षेत्रिय व्याधियों से तो चिरकाल से पीड़ित हूं। दाहिने कन्धे के जाम होने और बाजू में पीड़ा के कारण लेखन कार्य बन्द हो ही गया था। किसी प्रकार धर्मपत्नी देवी यशोदा के सान्निध्य से कालयापन कर रहा था, परन्तु दैव को यह भी स्वीकार नहीं था अतः ३-४ मास की अल्प बीमारी के पश्चात् पौष शुक्ला ११, सं० २०४३ (=१० जनवरी १९८७) को सहधर्मिणी देवी का भी निधन हो गया। हाथ से कार्य करने और पैरों से चलने में असमर्थ मैं एकाकी रह गया। लगभग डेढ़ वर्ष मन अशान्त सा रहा।

**आत्म-परिचय का लेखन**—सन् १९८८ में बोलकर कथंचित् आत्म-परिचय लिखवाया। मीमांसा-भाष्य के ७वें अध्याय के दो पादों की हिन्दी व्याख्या भी लिखाने का प्रयत्न किया, परन्तु सदा स्वयं लेखन के कारण बोलकर लिखाने का अभ्यास न होने से मीमांसा-भाष्य व्याख्या उचित रूप में लिखाई नहीं जा सकी। अतः मीमांसा-भाष्य व्याख्या का कार्य पूर्णतया बन्द करना पड़ा।

**महामहोपाध्याय मानद उपाधि**—सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी ने २८ जनवरी १९८९ के दीक्षान्त समारोह के अवसर पर मुझे **महामहोपाध्याय** मानद उपाधि से सम्मानित किया। यतः मैं उस अवसर पर रुग्ण होने के कारण उपस्थित नहीं हो सका अतः ३ जुलाई को श्री प्रो० वि० वेङ्कटाचलम् कुलपति (सं० सं० वि० वि० वाराणसी) ने कतिपय विद्वानों के साथ बहालगढ़ आकर समारोहपूर्वक मुझे उक्त मानद उपाधि प्रदान की।

**मीमांसा-भाष्य व्याख्या के लेखन का पुनरारम्भ**—मार्च सन् १९९० में कन्धे के पूर्ववत् जाम रहते हुए भी बाजू की पीड़ा में कुछ न्यूनता आई। जहां मेरे लिये एक साधारण पत्र लिखना कठिन था वहां २-३ पृष्ठ लिखना सम्भव प्रतीत

हुआ। अतः पूरे चार वर्ष के अन्तराल के पश्चात् अप्रेल (१९९०) में मीमांसा-भाष्य व्याख्या का लेखन कार्य पुनः आरम्भ किया। गति तो मन्द ही रही, परन्तु कार्य कथंचित् चलता रहा। जून के मध्य में ७वें अध्याय की व्याख्या पूरी हुई। ८वें अध्याय की व्याख्या सितम्बर के अन्त तक पूरी हो जानी थी। ५ दिन का कार्य शेष रहा था कि ज्वर से पीड़ित हो गया। तब से अब तक तीन बार ज्वर हो चुका है। निर्बलता बहुत बढ़ गई है। अतः ५ दिन का अवशिष्ट कार्य अब नवम्बर के अन्त में पूरा हुआ है।

इस षष्ठ भाग में सप्तम अष्टम अध्याय की व्याख्या है। ये दोनों अध्याय छोटे थे। आगे नवम अध्याय की व्याख्या आरम्भ करूंगा। यह अध्याय लगभग ७वें ८वें दो अध्यायों के बराबर है। आशा है स्वास्थ्य यदि ठीक रहा तो ७-८ मास में नवम अध्याय की व्याख्या पूर्ण हो जायेगी।

कागज छपाई और जिल्द बन्धाई का व्यय मंहगाई के कारण अत्यधिक बढ़ गया है। फिर भी रामलाल कपूर ट्रस्ट की मूल्य निर्धारण नीति के अनुसार न्यूनतम मूल्य ही रखा गया है।

मार्गशीर्ष सं० २०४७
नवम्बर सन् १९९०

विदुषां वशंवदः—
युधिष्ठिर मीमांसक

# मीमांसा-शाबरभाष्य-व्याख्या के सप्तम-अष्टम अध्यायों की अधिकरण-सूची

## सप्तमाध्याये प्रथमः पादः



## सप्तमाध्याये द्वितीयः पादः



## सप्तमाध्याये तृतीयः पादः

## अष्टमाध्याये तृतीयः पादः



## अष्टमाध्याये चतुर्थः पादः





## लेखक की कतिपय अन्य महत्त्वपूर्ण कृतियां

**मीमांसा-शाबर-भाष्य**–आर्षमतविमर्शिनी हिन्दी व्याख्या सहित। प्रथम भाग के आरम्भ में **शास्त्रावतार, वेदश्रुति-आम्नाय-संज्ञामीमांसा** तथा **श्रौतयज्ञमीमांसा** नामक तीन निबन्ध। प्रथम भाग ६०-००; द्वितीय ४०-००; तृतीय ५०-००; चौथा ४०-००; पांचवां ५०-००।

**मीमांसा-दर्शनम्–शाबरभाष्य-सहितम्** । अन्तेऽनेकपरिशिष्टसमन्वितम् । विविधाभि: टिप्पणीभि: समलङ्कृतम्, शास्त्रावतार-वेदश्रुतिआम्नायसंज्ञामीमांसा-श्रौतयज्ञमीमांसासंज्ञकनिबन्धसहितम्। सम्पादक:—युधिष्ठिरो मीमांसक:।

प्रथम भाग ६०-००।

**संस्कृत व्याकरणशास्त्र का इतिहास**—इसमें पाणिनि से प्राचीन २३ वैयाकरणों, पाणिनि तथा पाणिनि से उत्तरवर्ती १८ वैयाकरणों, उन पर टीका टिप्पणी लिखने वाले १०० से अधिक व्याख्याताओं का इतिहास लिखा गया है। तत्पश्चात् सभी व्याकरणों के धातुपाठ, उणादिसूत्र, लिङ्गानुशासन, परिभाषा-पाठ आदि के प्रवक्ताओं, व्याख्याताओं, व्याकरण के दार्शनिक, तथा काव्यप्रणेता वैयाकरणों का इतिवृत्त दिया है। नया परिष्कृत परिवर्धित संस्करण। तीन भागों का मूल्य १२५-००।

**आत्म-परिचय**—(वंश-परिचय एवं पूर्वज परिचय सहित)। इसमें लेखक ने अपने पूर्वज, विशेष करके पिता गौरीलाल आचार्य के वैदिक धर्म के प्रचार-प्रसार में किये गये उन कार्यों का उल्लेख किया है जिनके कारण इन्दौर राज्य उन्हें परेशान करता रहा। अन्त में स्व-परिचय दिया है। नया परिवर्धित संस्करण

मूल्य १००-००

# मीमांसा-शाबर-भाष्यम्

## (हिन्दी-व्याख्या-सहितम्)

## सप्तमाध्याये प्रथमः पादः

### [प्रयाजादिधर्माणामुपदेशेन प्रकृतिमात्रार्थताधिकरणम् ॥१॥]

पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां 'कर्मणां दर्शपूर्णमासादीनामिति-कर्तव्यता चिन्तिता। उत्तरेणेदानीमविहितेतिकर्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितु-मिष्यते। तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्मास्ते सर्वकर्मसु विहिता भवन्ति, ततस्तैरेव 'धर्मैरैन्द्राग्नादयोऽपि धर्मवन्त उक्तास्तथा कर्तव्याश्चेति, नार्थ उत्तरेण षट्केन। अथ ये यस्य प्रकरण उच्यन्ते, ते तत्रैवोक्ता भवन्ति। ततोऽधर्म-काण्यैन्द्राग्नादीनीति तेषु चिन्ता भवति, किमेषां धर्माः सन्त्युत नेति। यदा च सन्ति, तदा के कियन्तो वा कथं चानुष्ठातव्या इति। तदर्थमुत्तरः' षट्कः प्रवर्त-नीयः।

---

व्याख्या—पूर्व षट्क (=छः अध्यायों के समूह) से प्रत्यक्ष रूप से विहित धर्मोंवाले दर्शपूर्णमास आदि कर्मों की [प्रयाजादि रूप] इतिकर्तव्यता का विचार किया है। अब उत्तर [षट्क] से जिनकी इतिकर्तव्यता नहीं कही गई है ऐसे ऐन्द्राग्नादि [कर्म के विषय] में चिन्तन करना चाहते हैं। यदि तो दर्शपूर्णमासादि के प्रकरण में जो [प्रयाजादि] धर्म विहित हैं वे सब कर्मों में विहित होते हैं तब तो उन्हीं धर्मों से ऐन्द्राग्नादि [याग] भी धर्मवाले कहे गये और [उन्हें] उसी प्रकार करना चाहिये। उत्तर षट्क का कोई प्रयोजन नहीं है। और यदि जो [धर्म] जिसके प्रकरण में कहे गये हैं' वे वहीं (=उन्हीं कर्मों में) उक्त होते हैं, तब ऐन्द्राग्नादि अधर्मक (=धर्म से रहित) हैं, इससे उनमें विचार होता है—क्या इनके धर्म हैं अथवा नहीं हैं। जब हैं, तब कौनसे और कितने हैं और कैसे अनुष्ठान योग्य हैं। उसके लिये उत्तर षट्क का प्रवर्तन होना चाहिये।

---

१. टुप्टीकायामुद्धृते पाठे 'कर्मणां' पदं नास्ति।

२. 'सर्वैर्धर्मै॰' पाठा॰।

३. 'उत्तरषट्कः' पाठा॰।

तत्र सप्तमेन तावत्सन्ति धर्मा इत्युच्यते। अष्टमेन चेमेऽस्येति । इत्थं प्रयोक्तव्या इति नवमेन । दशमैकादशद्वादशैरेतावन्तः प्रयोक्तव्या नातोऽधिका इति ।

---

**विवरण—प्रत्यक्षविहितधर्मणां...... चिन्तिता**—भट्टकुमारिल ने टुप्टीका में इस भाष्य वचन तथा उत्तर किये गये विचार को अयुक्त माना है। उनका कहना है—कि सर्वपृष्ठा नाम की [अनेक कर्मवाली विकृति रूप] इष्टि में 'क्या स्विष्टकृत् के लिये उत्तरार्ध से एक बार अवदान करना चाहिये अथवा प्रतिकर्म भेद से अवदान करना चाहिये, यह [अ० ३, पा० ५, अधि० ४, सूत्र १६ में] विचार किया है। तथा—**दृतिनवनीतमाज्यं भवति** इत्यादि प्रत्यक्षविहित धर्मवाले कर्मों में भी [अ० ३, पा० ८, अधि० २०, सूत्र ३६-३८ में] चिन्तन किया है। इसलिये यहां इस प्रकार कहना चाहिये—'प्रकृति और विकृति में उपदिष्ट धर्मों का चिन्तन [पूर्व छः अध्यायों में] कर चुके हैं। **सप्तदश प्राजापत्यान्** इत्यादि में प्रत्यक्ष ही उपदेश है, सर्वपृष्ठादि में आनुमानिक वचन से उपदिष्ट धर्म के विषय में ही विचार किया है।

**ऐन्द्राग्नादिषु**—ऐन्द्राग्न आदि काम्य कर्मों का विधान तै० सं० काण्ड २, प्रपा० २-३-४-५ में विहित हैं। यथा—**योऽलं प्रजायै सन् प्रजां न विन्दत ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः** (तै० सं० २।२।१।१) इत्यादि।

**व्याख्या—ऐसी स्थिति में सप्तम अध्याय से [ऐन्द्राग्नादि के] धर्म हैं, यह कहा जाता है और अष्टम अध्याय से ये धर्म इसके हैं, नवम अध्याय से इस प्रकार से प्रयोग करना, दशम एकादश और द्वादश अध्याय से इतने धर्म प्रयोगार्ह हैं, इससे अधिक नहीं [यह कहा जाता है]।**

**विवरण—तत्र सप्तमेन**—इत्यादि उत्तर षट्क के विषय में भी भट्टकुमारिल ने अन्य प्रकार से लिखा है। यथा—

सप्तम अध्याय से विकृति यागों के अनिदेश (=प्रकृतिवद् विकृतिः कर्तव्या) से धर्म होते हैं, यह प्रतिपादन किया जाता है। अष्टमाध्याय से विशेष धर्मों का प्रतिपादन किया है। नवमाध्याय से विशेष अतिदेश प्रसङ्ग से आरम्भ किया है—क्या मन्त्र अग्नि के स्वरूप के प्रतिपादन के लिये उच्चारण किया जाता है, अथवा अग्नि का स्वरूप अविवक्षित है। इससे 'इस प्रकार प्रयोग करना चाहिये, यह अतिदेश प्रसङ्ग में ही विचार किया है। दशम अध्याय में [प्रकृति से प्राप्त धर्म का] बाध, [प्रकृति प्राप्त धर्म के साथ विकृत्युक्त धर्म का] अभ्युच्चय (=सहभाव[1]) अनुनिष्पादिनी[2] शेष इयत्ता का विचार किया है। इयत्ता के प्रसङ्ग से एकादश

---

१. इदमिह भवतीति विज्ञाते अपरमपि भवतीति विज्ञानम् [अभ्युच्चयः]। शाबरभाष्य १०।१।१॥ अभ्युच्चयो नाम न किञ्चिद् वस्तुस्वरूपं विद्यते, किन्तु उपहोमैः अनूयाजा न बाध्यन्ते इति बाधाभावमात्रम् अभ्युच्चय उच्यते। टुप्टीका ११।१।१।१। पृष्ठ २०९६ (शाबरभाष्य पूना सं०)।

२. अभ्युच्चय से प्राप्त प्रकृतिप्राप्त इयत्ता के पश्चात् निष्पादनीय शेष इयत्ता।

तत्रेदं विचार्यते, किं यजिप्रयुक्ता एते धर्माः—कथं यजिर्गुणवान्स्यादित्येवमर्थमाम्नायन्ते, आहोस्विदपूर्वप्रयुक्ताः—कथमपूर्वं स्यादिति। यदि यजिप्रयुक्तास्ततः सर्वार्थाः। अथापूर्वप्रयुक्तास्ततो यथाप्रकरणं व्यवतिष्ठन्ते। किं पुनरत्र युक्तम्। अपूर्वप्रयुक्ता इति। अपूर्वं हि फलवत्। अफलो यजिः। फलवति च प्रयासो विधीयमानोऽर्थवान् भवति। तस्मादपूर्वप्रयुक्ता धर्मा इति। अतः परमाचार्यस्य सूत्रोपन्यासः—

[१] श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥१॥(उ०)

---

अध्याय प्रयोग की इयत्ता के विचारार्थ आरम्भ किया है। तन्त्र (=जो एक बार प्रयुक्त बहुतों का उपकार करे) और आवाप (=आवृत्ति से उपकार करे[1]) से इस प्रकार (=ऐसी) इयत्ता के प्राप्त होने पर उसके अपवाद रूप से द्वादश अध्याय आरम्भ किया जाता है।··· अथवा सौर्यादि याग अतिदेश से प्राकृत धर्मों से अधिकृत होते हैं अथवा नहीं, इस प्रसङ्ग से सप्तम अध्याय आरम्भ किया जाता है। उस अतिदेश के बल से विशेषातिदेश ऊह और बाध का आरम्भ होता है [८-९-१० अध्यायों में]। पर्यनुयोग (=प्रश्न) अविशेष=साधारण होने[2] से दशम के अनन्तर तन्त्र और आवाप के प्रसङ्ग प्रस्तुत होते हैं [११-१२-अध्यायों में]।

व्याख्या—उक्त विषय में यह विचारा जाता है—क्या ये धर्म यजि=याग से प्रयुक्त हैं—याग कैसे गुणों से युक्त होवे, इसलिये [उक्त धर्म] आम्नात हैं? अथवा अपूर्व से प्रयुक्त हैं—अपूर्व कैसे उत्पन्न होवे। यदि याग से प्रयुक्त हैं तो [उक्त धर्म] सर्वार्थ (=सब यागों के लिये) होवें और यदि अपूर्व प्रयुक्त होवें तो यथाप्रकरण व्यवस्थित रहते हैं। अर्थात् जो धर्म जिस याग के प्रकरण में कहे गये हैं उनके ही होते है। इनमें युक्त क्या है? अपूर्व से प्रयुक्त है [यही युक्त है]। अपूर्व ही फलवान् है, याग फलरहित है। फलवान् के प्रति विधीयमान प्रयत्न अर्थवान् होता है। इससे धर्म अपूर्व से प्रयुक्त हैं। इसी हेतु से परमाचार्य के सूत्र का उपन्यास है—

[१] श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥१॥

सूत्रार्थः—(शेषाणाम्) प्रयाजादि शेष कर्मों के (श्रुतिप्रमाणत्वात्) श्रुति प्रमाण वाला होने से अर्थात् यह इसका शेष है इसके श्रुति से ही जानने योग्य होने से (मुख्यभेदे) मुख्य=अपूर्व के भेद होने पर शेष प्रयाजादि (यथाधिकारं) अधिकार के अनुसार=जो जिस अपूर्व के प्रसङ्ग में पठित है, वहीं (भावः) उनकी सत्ता (स्यात्) होवे।

---

१. यत्सकृत् कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते। यस्त्वावृत्त्या उपकरोति स आवापः। शावरभाष्य ११।१।१॥

२. पर्यनुयोगाविशेषात्—'यह बात यहां क्यों कही, वहां क्यों नहीं कही' रूप प्रश्न के साधारण होने से।

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यादिति। मुख्यान्यपूर्वाणि। तानि हि फलवत्त्वात्प्रधानानि। प्रधाने च मुख्यशब्दः। तेषां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः[1]। तस्मिन्मुख्यभेदे सति यथाधिकारं भावः स्याच्छेषाणाम्। ये यस्यापूर्वस्याधिकारे प्रकरणे शिष्यन्ते, ते तस्यैव भवेयुः। श्रुतिप्रमाणत्वात्। अयमस्यापूर्वस्य शेषोऽयमस्येत्यत्र श्रुतिरेव प्रमाणं क्रमते। न प्रत्यक्षादीनामन्यतमम्। श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते ते तस्यैव भवितुमर्हन्ति। न चान्यस्योक्तोऽर्थोऽन्यस्य भवति। न हि यद्देवदत्तस्य 'ग्रामाच्छादनादिकं, तद्यज्ञदत्तस्य भवति। तस्माद्यथाप्रकरणं व्यवस्था धर्माणाम् ॥१॥

उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥२॥ (पू०)

---

व्याख्या—श्रुति प्रमाण वाला होने से शेषों के, मुख्य के भेद में यथाधिकार सत्ता होवे। अपूर्व मुख्य हैं। वे ही फलवान् होने से प्रधान हैं। मुख्य शब्द प्रधान अर्थ में है। उनका भेद 'शब्दान्तर' आदि हेतु से कह चुके हैं। उस मुख्य के भेद होने पर यथाधिकार शेषों का भाव (=सत्ता) होवे। जो [शेष] जिस अपूर्व (=प्रधान) के प्रकरण में कहे जाते हैं, वे उसी के होवें, श्रुति के प्रमाण होने से। यह इस अपूर्व का शेष है, यह इसका, इस विषय में श्रुति ही प्रमाण होती है। प्रत्यक्षादियों में अन्यतम प्रमाण नहीं होता है। श्रुति से जो जिस [अपूर्व के] प्रकरण में सुने जाते हैं, उसी [अपूर्व] के होने योग्य हैं। अन्य को कहा गया अर्थ(=द्रव्यादि) अन्य का नहीं होता है। देवदत्त का जो ग्राम वा आच्छादन(=वस्त्रादि) वह यज्ञदत्त का नहीं होता है। इस कारण यथाप्रकरण धर्मों की व्यवस्था जाननी चाहिये।

विवरण—भेद उक्तः शब्दान्तरादिभिः—द्वितीय अध्याय के द्वितीय पाद में शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् (सूत्र १) से पाद के अन्त तक अनेक हेतुओं से कर्मभेद का निरूपण किया गया है। ग्रामाच्छादनादिकम्—इसका पाठान्तर है—ग्रासाच्छादनमुक्तम्। अर्थात् देवदत्त का जो ग्रास (=भोजन) और आच्छादन (=वस्त्र) कहा गया है।

उत्पत्त्यर्थाविभागाद् वा सत्त्ववदैकधर्म्यं स्यात् ॥२॥

सूत्रार्थः—[वा] 'वा' शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है अर्थात् शेष धर्म अपूर्व प्रयुक्त नहीं हैं। (उत्पत्त्यर्थाविभागात्) उत्पत्ति=यजि का अर्थ=अपूर्व उसके विभाग न होने से (ऐकधर्म्यम्) एक=समान धर्म होवें अर्थात् शेष धर्म सबका समान (स्यात्) होवे। (सत्त्ववत्) सत्त्व=द्रव्य के धर्म के समान 'गौ का पैर से स्पर्श नहीं करना चाहिये' यह धर्म

---

१. मी० २।२। अधि० १। सूत्र १—'शब्दान्तरे कर्म भेदः कृतानुबन्धत्वात्' सूत्रादारभ्याऽऽपादान्तं कर्मभेदहेतवो विवृताः।

२. 'ग्रासाच्छादनमुक्तम्' इति पाठान्तरम्।

अथवा—नैतदेवं, यथाप्रकरणं धर्माणां व्यवस्थेति। कथं तर्हि ? ऐकधर्म्यं स्यादिति। समानधर्मता। सर्वे धर्माः सर्वार्थाः। कुतः ? उत्पत्त्यर्थाविभागात्। उत्पत्तिरिति यजिं ब्रूमः, अपूर्वस्योत्पादनात्। अर्थ इत्यपूर्वं ब्रूमः, यजिप्रयोजनत्वात्। तयोरविभागः। सर्वाण्यपूर्वाणि यजिमन्ति। यजिसंयोगेन धर्माः शिष्यन्ते। यजेतेत्युक्त्वोक्ताः। ते यजौ न संभवन्ति। तस्याफलत्वात्। तत्रासंभवन्तस्तत्संबद्धेष्वपूर्वेषु विज्ञायन्ते। स च यजिसम्बन्धः सर्वेषामपूर्वाणां तुल्यः। तस्मात्सर्वार्था भवन्ति। सत्त्वधर्मवत्। यथा सत्त्वधर्माः, **गौर्न पदा स्प्रष्टव्या**[1] इति गोत्वसंबन्धेन श्रूयमाणास्तत्रासंभवन्तस्तत्संबद्धेषु पिण्डेषु विज्ञायन्ते। तस्य च गोत्वसंबन्धस्याविशेषात्सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति। एवमिहापि।

उच्यते। विषम उपन्यासः। तत्र गोसामान्यसम्बन्धेन धर्मा विधीयन्ते। **गौर्न पदा स्प्रष्टव्या**[1] इति। इह पुनर्यजिविशेषसम्बन्धेन धर्मा विधीयन्ते—**दर्शपूर्ण-**

---

गोत्व से सम्बद्ध सब पिण्डों में जाना जाता है (किसी विशेष गाय में नहीं जाना जाता है) के समान शेष धर्म यजिमात्र को होवें।

व्याख्या—अथवा—ऐसा नहीं है, यथाप्रकरण धर्मों की व्यवस्था होवे। तो कैसे है ? एकधर्मता होवे [अर्थात्] समानधर्मता होवे। सब धर्म सबके लिये हैं। किस हेतु से ? उत्पत्ति के अर्थ का विभाग न होने से। 'उत्पत्ति' से यजि' (=याग[2]) को कहते हैं अपूर्व के उत्पादन करने से। 'अर्थ' से अपूर्व को कहते हैं, यजि का प्रयोजन होने से। उनका अविभाग है। सभी अपूर्व यजिमत् (=यजि से युक्त हैं) यजि के सयोग से धर्म कहे जाते हैं। 'यजेत' ऐसा कहकर कहे गये हैं। वे [धर्म] 'यजि' में सम्भव नहीं हैं। उस (=यजि) के फलरहित होने से। इससे वहां (=यजि में) सम्भव न होते हुए उस (=यजि) से सम्बद्ध अपूर्वों में जाने जाते हैं। और वह यजि का सम्बन्ध सब अपूर्वों के साथ समान है। इस हेतु से [धर्म] सबके लिये होते हैं। सत्त्वधर्म के समान। जैसे सत्त्व के धर्म—गौर्न पदा स्प्रष्टव्या (='गौ को पैर से नहीं छूना चाहिये' यह गोत्व के सम्बन्ध से श्रूयमाण वहां (=गोत्व में) असम्भव होते हुए पिण्डों (=गोशरीरों) में जाना जाता है। उस गोत्व सम्बन्ध के समान होने से शुक्ल नील कपिल और कपोतिक (=कबूतर के रङ्ग की) सब गौओं में [उक्त धर्म संबद्ध] होता है। इसी प्रकार यहां भी जानना चाहिये।

(आक्षेप) यह उपन्यास (=दृष्टान्त) विषम है। वहां (='गौर्न पदा स्प्रष्टव्या' में) गोसामान्य के सम्बन्ध से धर्म विधान किये जाते हैं—गौ को पैर से नहीं छूना चाहिये। यहां

---

१. अनुपलब्धमूलम्। 'स्प्रष्टव्य इति' पूनासंस्करणे पाठः।

२. सर्वत्र 'यजि' का अर्थ याग समझें।

**मासाभ्यां यजेत,**[1] **ज्योतिष्टोमेन यजेत**[2] इति । विशिष्टयजिसम्बद्ध एवापूर्वे भवितुमर्हन्ति, न सर्वत्रेति । तत्र[3] ब्रूमः । **दर्शपूर्णमासाभ्यां यजेत** इत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम् । किं कारणम् ? यदा यजौ धर्मा विधीयन्ते, तदा यजिरनूद्यते—यजेतेत्थमिति । यदि यजिर्विधीयेत, न धर्मैः सम्बध्येत । न हि द्वयोर्विधीयमानयोः परस्परेण सम्बन्धो भवति । अनुवादश्च सन्नविशेषात् सर्वयागानुवादः । तस्मात् सर्वार्था धर्माः । ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति ? न दर्शपूर्णमासशब्दः शक्नोति यागं विशेष्टुम् । अयं हि विधिर्वा स्यादनुवादो वा । यदाऽनुवादस्तदा धर्मसम्बन्धार्थः । स च धर्मसम्बन्धो यागानुवादेनैव तयोः सिद्धः ।

---

**यजि-विशेष के सम्बन्ध से धर्मों का विधान किया जाता है**—दर्शपूर्णमासाभ्यां यजेत (=**दर्शपूर्णमासों से यजन करे**), ज्योतिष्टोमेन यजेत (=**ज्योतिष्टोम से यजन करे**) । **यहां विशिष्ट यजि से सम्बद्ध अपूर्व में ही [धर्म]होने योग्य हैं, सर्वत्र नहीं ।** (समाधान) **इस विषय में कहते हैं**—दर्शपूर्णमासाभ्यां यजेत **यहां** (=इस वाक्य में) **याग विशेष में धर्मों का विधान नहीं किया जा सकता है । क्या कारण है ? जब यजि में धर्मों का विधान किया जाता है, तब यजि का अनुवाद होता है—यजन करे इस प्रकार । यदि यजि का विधान किया जाता है, [तो वह] धर्मों के साथ सम्बद्ध नहीं होता है । दो विधीयमान अर्थों का परस्पर सम्बन्ध नहीं होता है । और [यजि का] अनुवाद होता हुआ विशेष न होने से सब यागों का अनुवाद है । इस कारण धर्म सबके लिये हैं ।** (आक्षेप) **दर्श-पूर्णमास शब्द [यजि का] विशेषक होगा ।** (समाधान)**दर्शपूर्णमास शब्द याग को विशेषित नहीं कर सकता । यह**(=दर्शपूर्णमासाभ्यां **यजेत में 'यजेत' पद) विधि हो सकता है अथवा अनुवाद हो सकता है । जब अनुवाद होगा तब धर्म सबके लिये होंगे और वह धर्म का सम्बन्ध याग के अनुवाद से ही उन**(=दर्शपूर्णमास **यागों) का सिद्ध है ।**

**विवरण—यजिविशेषसम्बन्धेन**—'दर्शपूर्णमासाभ्यां यजेत' 'ज्योतिष्टोमेन यजेत' में दर्शपूर्णमास से और ज्योतिष्टोम से सम्बद्ध जो यागविशेष है, उनके सम्बन्ध से धर्मों का विधान किया है । **यजेतेत्थम्**—इन धर्मों के साथ याग करे । **विधिर्वा स्यात्**—'यजेत' को विधि मानने पर धर्मों के साथ सम्बन्ध नहीं होगा, सम्बन्धविधायक वचन के न होने से । **यदानुवादः**—जब 'यजेत' अनुवाद होगा तब **यागमुद्दिश्य धर्मा विधीयन्ते** (=याग को उद्देश करके धर्मों का विधान किया जाता है) ऐसा स्वीकार करने पर 'यजि' मात्र का अनुवाद होने से धर्म सबके लिये होंगे ।

---

१. द्र०—दर्शपूर्णमासाभ्यां यजते । ऐ० ब्रा० १।१॥

२. द्र०—वसन्ते वसन्ते ज्योतिष्टोमेन यजेत । आप० श्रौत १०।२।५॥

३. 'अत्र वदामः'—पाठान्तरम् ।

ननु निवृत्तिकरो भविष्यति। दर्शपूर्णमासावेवेत्थं कुर्यान्नान्यानिति। नैवं शक्यम्। यत्करणं न तस्यान्यनिवृत्तिरर्थः। ननु परिसंख्यया करिष्यति। नात्र परिसंख्या युज्यते। यद्यन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात् तत एतत् पुनर्वचनं[1] परिसंख्यां कुर्यात्। अथ पुनरसति प्रसंगेऽनेनैव प्रसङ्गोऽनैव निवृत्तिरिति[2], अतिभार एकस्यैव वाक्यस्य भवति।

एवं तर्हि, नात्र यजेतेति शब्दो धर्मविधिभिः संबध्यते, यजेत इत्थमिति। केन तर्हि? दर्शपूर्णमासशब्देन। प्रत्यक्षो हि तेनास्य संयोगः—**दर्शपूर्णमासाभ्यां यजेत** इति। परोक्षो धर्मविधिभिः। कस्तदा वाक्यार्थः? दर्शपूर्णमासौ कुर्यादिति।

---

**व्याख्या – (आक्षेप) [दर्शपूर्णमास शब्द] निवृत्ति करने वाला होगा। दर्शपूर्णमास ही ऐसा करे, अन्यों को न करे। (समाधान) ऐसा नहीं हो सकता है। जो करण [कारक] है, उसका 'अन्य की निवृत्ति' अर्थ नहीं है। (आक्षेप) परिसंख्या [अन्य की निवृत्ति] कर देगी। (समाधान) यहां परिसंख्या युक्त नहीं होती है। यदि अन्य वाक्य से यागमात्र में धर्म का प्रसङ्ग (=प्राप्ति) होवे तो उससे यह पुनः [दर्शपूर्णमास आदि] वचन परिसंख्या करे। और [यागमात्र में] प्रसङ्ग (=प्राप्ति) के न होने से इसी (='दर्शपूर्णमासाभ्यां यजेत' वचन) से ही प्रसक्ति और निवृत्ति होवे, यह एक ही वाक्य का अतिभार होता है।**

**विवरण—यत्करणं इत्यादि—'धनुषा विध्यति' कहने पर वेधन क्रिया में धनुष करण है, साधक है। इतना ही अर्थ बोधित होता है। उसका असिना न विध्यति (=तलवार से वेधन नहीं करता) यह अर्थ नहीं होता है। परिसंख्या करिष्यति—अन्य से सामान्य रूप से प्राप्त को** किसी नियत विषय में बांधना (=रोकना) परिसंख्या कहाती है अर्थात् जहां इष्ट है वहां तथा जहां इष्ट नहीं है वहां, उभयत्र प्राप्ति होने पर अनिष्ट के परित्याग का विधान करना परिसंख्याविधि कहाती है। यथा—ब्राह्मणों को दही दो कौण्डिन्य को तक्र (=मट्ठा) दो। यहां कौण्डिन्य के ब्राह्मण होने से पूर्व वाक्य से दही देना प्राप्त है उसकी कौण्डिन्य के तक्रदान से निवृत्ति होती है। परिसंख्या में स्वार्थहानि, परार्थकल्पना और प्राप्तबाधा ये तीन दोष होते हैं (द्र०—मी० १।३।३१ भाष्य तथा विवरण, भाग १, पृष्ठ १८५)।

**व्याख्या—(आक्षेप) अच्छा तो यहां 'यजेत' शब्द धर्मविधियों से सम्बद्ध नहीं होता है—इस प्रकार यजन करे। तो किसके साथ सम्बद्ध होता है? दर्शपूर्णमास शब्द के साथ। इस (=यजेत) का प्रत्यक्ष ही उस (=दर्शपूर्णमास) के साथ सम्बन्ध है—दर्शपूर्णमासाभ्यां यजेत। धर्मविधि के साथ [सम्बन्ध] परोक्ष है। तो उस अवस्था में क्या वाक्यार्थ होगा?**

---

१. 'ततः पुनर्वचनं' पाठान्तरम्।
२. 'निवृत्तिर्विधीयेत। भिद्येत तर्ह्येवं वाक्यम्। भवत्वेवं तर्हि' पाठान्तरम्।

नैवं शक्यम् । एवं सति धर्मा असम्बद्धाः पारिप्लवा भवन्ति । कथं कृत्वा ? येयमाख्यातिकी विभक्तिर्यजेतेति, सा दर्शपूर्णमासयोः कर्तव्यतां विदधाति । तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसम्बन्धः स्यात् ? विधायिका विभक्तिर्नास्तीत्यसम्बद्धा धर्मा भवन्ति । नैष दोषः । न वयं वाक्येन धर्माणां सम्बन्धं करिष्यामः । केन तर्हि ? प्रकरणेन । कथम् ? कर्तव्यतायां चोदितायामितिकर्तव्यताकाङ्क्षा भवति, कथं कुर्यादिति । प्रकरणेन धर्माः सम्बध्यन्ते, इत्थं कुर्यादिति ।

नैवं शक्यम् । यदा हि दर्शपूर्णमासौ कर्तव्यतया चोद्येते, तदेतिकर्तव्यताकाङ्क्षैव नास्ति । प्रज्ञातेतिकर्तव्यतात्वात्तयोः । असत्यां चेतिकर्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति । एवं तद्युक्तम्—**असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वाद्**[1] इति । एवं तर्हि, नैवात्र यागे धर्मा विधीयन्ते । नापि दर्शपूर्णमासयोः कर्तव्यतोच्यते । किं तर्हि ? **दर्शपूर्णमासाभ्यां यजेत** इति पदद्वयेन विशिष्टं यागमनूद्यात्र धर्मा विधीयन्ते, दर्शपूर्णमासाभ्यां यजेतेत्थमिति । एवमपि दर्शपूर्णमासाभ्यामित्य-

---

दर्शपूर्णमासों को करे । ऐसा नहीं हो सकता है । ऐसा होने पर धर्म असम्बद्ध हुए पारिप्लव (=अस्थिर) होते हैं । यह कैसे ? जो यह 'यजेत' आख्यातिकी विभक्ति है वह दर्शपूर्णमासों की कर्तव्यता का विधान करती है । उस अवस्था में यागमात्र के साथ अथवा याग विशेष के साथ धर्म का सम्बन्ध कैसे होगा ? [धर्म संबन्ध की] विधायिका विभक्ति न होने से धर्म असम्बद्ध होते हैं । यह दोष नहीं है । हम वाक्य के द्वारा धर्मों का सम्बन्ध नहीं करेंगे । तो किससे करोगे ? प्रकरण से । कैसे ? कर्तव्यता की चोदना (= विधि) होने पर इतिकर्तव्यता की आकाङ्क्षा होती है—कैसे करे । प्रकरण से धर्म सम्बद्ध होते हैं - इस प्रकार करें ।

(समाधान) ऐसा नहीं कर सकते । जब दर्शपूर्णमास कर्तव्यरूप से कहे जाते हैं, तब (=उस समय) इतिकर्तव्यता की आकाङ्क्षा ही नहीं है । उनके विज्ञात इतिकर्तव्यता वाले होने से । इतिकर्तव्यता की आकाङ्क्षा न होने से (दर्शपूर्णमास का) प्रकरण ही नहीं है । इसी से ऐसा कहा है—असंयुक्त प्रकरणाद् इतिकर्तव्यतार्थित्वात् (=[श्रुति लिङ्ग और वाक्य से] असम्बद्ध इतिकर्तव्यता की आकाङ्क्षा वाला होने से प्रकरण से सम्बद्ध होता है) । (आक्षेप) अच्छा तो, न याग में धर्मों का विधान किया जाता है और नाही दर्शपूर्णमास की कर्तव्यता कही जाती है । तो क्या कहा जाता है ? दर्शपूर्णमासाभ्यां यजेत इन दो पदों से विशिष्ट याग का अनुवाद करके धर्मों का विधान किया जाता है—'दर्शपूर्णमासों से यजन करे' इस प्रकार । (समाधान) इस प्रकार भी 'दर्शपूर्णमासाभ्याम्' यह अनुवाद युक्त नहीं

---

१. (अ० ३ । अ० ४ सू० ११) ।

नुवादो न युज्यते। तृतीयार्थस्यासिद्धत्वात्। पूर्ववानमुवादो भवति। अपूर्वश्च तृतीयार्थः। सोऽवश्यं विधातव्यः। तस्मिंश्च विधीयमानेऽन्यदेवासम्बद्धमापद्यते, दर्शपूर्णमासौ यजेः करणमिति। तस्मात्स एव प्रथमः पक्षोऽस्तु;यागानुवादेन धर्माणां विधिरिति।

ननु तत्रापि दर्शपूर्णमासाभ्यामित्येतन्न संबध्यते। ननु संभन्त्स्यते। कालवचनः सन् प्रायिको नित्यानुवादो भविष्यति। प्रायेण यागानां दर्शपूर्णमासकालत्वात्। तृतीया च कालस्यार्थकृतं गुणभावमालोच्योपपद्यते। तथा चेत्सर्वे धर्माः सर्वार्था भवन्ति ॥२॥

**चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥३॥ (उ०)**

कर्मचोदनायाः शेषभूतो धर्मसमाम्नायः, एकदेशभूत इत्यर्थः। दर्शपूर्णमासाभ्यां यजेत, अनयाऽन्यन्वाधानादिकयेतिकर्तव्यतयेति। तस्यां चोदनायां यजेर्गुण-

---

होता है। तृतीयार्थ के असिद्ध होने से। अनुवाद पूर्ववान् (=पूर्व कहे हुए) का होता है। और तृतीया का अर्थ अपूर्व है, वह अवश्य विधान करने योग्य है। उसके (=तृतीयार्थ के) विधीयमान होने पर अन्य ही असम्बद्ध [अर्थ] उपपन्न होता है—दर्शपूर्णमास यज् धातु का करण है, यह अर्थ। इसलिये वही प्रथम पक्ष होवे—याग के अनुवाद से धर्मों की विधि है।

(आक्षेप) इस पक्ष में भी 'दर्शपूर्णमासाभ्याम्' यह पद सम्बद्ध नहीं होता। (समाधान) सम्बद्ध हो जायेगा। ['दर्शपूर्णमासाभ्याम्' यह] काल को कहने वाला होकर प्रायिक नित्य अनुवाद हो जायेगा। प्रायः करके यागों के दर्श और पूर्णमास काल वाले होने से। और तृतीया काल के अर्थतः प्राप्त गुण भाव की दृष्टि से उपपन्न होती है, और ऐसा होवे तो [दर्शपौर्णमास प्रकरण में कहे गये] सब धर्म सबके लिये होते हैं।

**चोदनादिशेषत्वाद् वा तद्भेदाद् व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥३॥**

सूत्रार्थः—(वा) वा शब्द पूर्वपक्ष की निवृत्ति के लिये है। (चोदनाशेषभावात्) प्रयाज आदि धर्मों के दर्शपूर्णमास विधि के शेषभूत होने से (तद्भेदात्) भावना के भेद होने से (व्यवतिष्ठेरन्) प्रयाज आदि धर्म दर्शपूर्णमास के ही व्यवस्थित होंगे। (उत्पत्तेः) प्रयाज आदि धर्मों की विधि के (गुणभूतत्वात्) गुणभूत होने से अर्थात् दर्शपूर्णमास के लिये होने से।

व्याख्या—धर्मों का पाठ कर्म (=दर्शपूर्णमास) की विधि के शेषभूत होने से अर्थात् एकदेशभूत होने से दर्शपौर्णमासाभ्यां यजेत (=दर्शपूर्णमास से यजन करे) इस अग्न्यन्वाधान आदि इतिकर्तव्यता के द्वारा। उस (=दर्शपूर्णमास की) विधि में याग का गुण भाव

भावः श्रूयते, दर्शपूर्णमासाभ्यामिति । दर्शपूर्णमासशब्दो हि यजिवचनः । करणभावोऽत्र यजेः श्रूयते—दर्शपूर्णमासाख्येन यागसमुदायेनान्यत्कुर्यादिति । 'यत्ततोऽन्यत्, तत्कर्तव्यतया चोद्यते, न यजिः । अपूर्वं च तत् । ननु फलमत्र वाक्ये श्रूयते, स्वर्गकामो यजेतेति । तत्कर्तव्यं स्यात् । सत्यं श्रूयते, न तु तद्यजिना क्रियते । विनष्टे यजौ तद्भवति । अपूर्वं तु तेन क्रियते । तस्मात्तस्य कर्तव्यतोच्यते । यस्य कर्तव्यता तदितिकर्तव्यतया सम्बध्यते । तस्मादपूर्वार्था धर्माः । तेषां चापूर्वाणां भेद उक्तः । अतस्तद्भेदाद्यथाप्रकरणं व्यवतिष्ठन्ते धर्मा इति ।

अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते । उच्यते । नैवात्र यागो विशेष्यते । किं तर्हि ? अपूर्वभावनैवोभयपदविशिष्टोच्यते । यथा—अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति[2] इति । विषम उपन्यासः । तत्र ह्यन्यद्द्रव्यमन्यो

---

सुना जाता है – दर्शपूर्णमासों से [यजन करे] । दर्शपूर्णमास शब्द निश्चय ही याग का वाचक है । यहां याग का करणत्व सुना जाता है—दर्शपूर्णमास संज्ञा वाले यागसमुदाय से अन्य करे । जो अन्य है, वह कर्तव्यतारूप से कहा गया है, न कि याग । और वह अपूर्व है । (आक्षेप) यहां वाक्य में फल सुना जाता है – स्वर्ग की कामनावाला यजन करे । [अतः] वह (=स्वर्ग) कर्तव्य होवे । (समाधान) सत्य ही [स्वर्ग] सुना जाता है, परन्तु वह याग से नहीं किया जाता । याग के नष्ट हो जाने पर वह (=स्वर्ग) उत्पन्न होता है । उस याग से तो अपूर्व पैदा होता है इससे उस (=अपूर्व) की कर्तव्यता कही है । जिसकी कर्तव्यता कही है वह इतिकर्तव्यतारूप से सम्बद्ध होता है । इसलिये [प्रयाजादि] धर्म अपूर्व के लिये और उन अपूर्वों का भेद कहा जा चुका है । इससे अपूर्व के भेद होने से यथाप्रकरण धर्म व्यवस्थित होंगे (=संबद्ध होंगे) ।

विवरण – अपूर्वाणां भेद उक्तः—अपूर्वों का भेद द्वितीय अध्याय से कहा गया है अर्थात् अपूर्व भेद ही द्वितीय अध्याय का प्रयोजन है ।

व्याख्या—(आक्षेप) इस पक्ष में भी दर्शपूर्णमास शब्द से याग कैसे विशेषित होगा? (समाधान) यहां [दर्शपूर्णमास शब्द से] याग विशेषित नहीं होता है । तो क्या होता है ? अपूर्व की भावना ही दोनों पदों से विशेषित कही जाती है । जैसे अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति में । (आक्षेप) यह दृष्टान्त विषम है । वहां (=अरुणया आदि

---

१. 'यत्तदन्यत्, तत् तत्कर्तव्यतया चोद्यते । तदितिकर्तव्यतया सम्बध्यते न यजिः'—पाठान्तरम् ।

२. अनुपलब्धमूलम् । द्र०—एकहायन्या क्रीणाति ·····अरुणया पिङ्गाक्ष्या क्रीणाति । तै० सं० ६।६।१।७॥

गुणः । तेन तत्रोभयविशेषणत्वं¹ युज्यते । इह पुनर्याग एव तौ दर्शपूर्णमासौ । तेनेहोभयपदविशेषणत्वं न युज्यते । उच्यते । इहापि यजेतेति सामान्यं, दर्शपूर्णमासाविति विशेषः । अन्यच्च सामान्यमन्यो विशेषः । एवमपि श्रुत्या 'सामान्यस्य भावना, वाक्याद् विशेषस्य'। न चैतद् युगपद्भवतीति । एवं तर्हि, नैवात्र श्रुत्यर्थः परिगृह्यते । किं तर्हि ? वाक्यार्थः । किं कारणम् ? श्रुत्यर्थे परिगृह्यमाणे दर्शपूर्णमासशब्दोऽनर्थको भवति । यजतिश्चानुवादः । यजत्यात्मकत्वाद्दर्शपूर्णमासयोः । यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य ॥३॥

## सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥४॥ (उ०)

---

वाक्य में) तो द्रव्य अन्य है और गुण अन्य है । इससे उभयपद विशेषणत्व युक्त है । यहां तो याग ही वे दर्शपूर्णमास हैं । इससे उभयपद विशेषणत्व युक्त नहीं होता है । (समाधान) यहां भी 'यजेत' यह सामान्य है । 'दर्शपूर्णमासौ' यह विशेष है । सामान्य अन्य है और विशेष अन्य हैं । (आक्षेप) इस प्रकार भी श्रुति से सामान्य (=यजेत) का कथन है और वाक्य से विशेष (=दर्शपूर्णपूर्णमासौ) का । ये दोनों युगपत् [सम्बद्ध] नहीं हो सकते । (समाधान) अच्छा तो यहां श्रुति का अर्थ परिगृहीत नहीं होता । तो क्या [परिगृहीत होता] है ? वाक्यार्थ । क्या कारण है ? श्रुत्यर्थ के परिगृहीत होने पर दर्शपूर्णमास शब्द अनर्थक होता है और यज् धातु अनुवाद होता है । दर्शपूर्णमास के यजति रूप होने से । और दर्शपूर्णमास शब्द का यजति के साथ सामानाधिकरण्य होने से ।

विवरण—अरुणया पिङ्गाक्ष्या ·· —यहां अरुण आदि गुण और गौ दोनों से विशिष्ट क्रयरूप भावना कही जाती है । एवमपि श्रुत्या ·· युगपद् भवति—भट्टकुमारिल ने इस भाष्य का खण्डन किया है । उसे उसकी इसी सूत्र की टुप्टीका में देखें ॥३॥

### सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत ॥४॥

सूत्रार्थः—(सत्त्वे) गौ आदि व्यक्तियों में (लक्षणसंयोगात्) लक्षणा वृत्ति के सम्बन्ध से (सार्वत्रिकम्) सर्व व्यक्तियों में 'पैर से नहीं छूना चाहिये' आदि धर्म (प्रतीयेत) जाना जाये । अर्थात् आकृति के पदार्थ होने से गौ के विषय में कहे गये धर्म उसमें सम्भव नहीं हैं, इसलिये लक्षणा वृत्ति से तत्सहचरित व्यक्ति में ये धर्म जाने जाते हैं ।

विशेष सत्त्व धर्मों के लिये इसी प्रकरण का दूसरा सूत्र और उसका भाष्य देखें ।

---

१. तेन उभयपदविशेषणत्वं' पाठान्तरम् ।

२. 'सामान्येन' पाठान्तरम् । ३. 'विशेषेण' पाठान्तरम् ।

यत्तु सत्त्ववदिति । अत्र गवाकृतौ धर्मः श्रूयते, आकृतेः पदार्थत्वात् । न च तत्र सम्भवति । अतोऽसावाकृतिः सहचारिपिण्डलक्षणार्था विज्ञायते । यथा गङ्गायां घोष इति । तच्च साहचर्यं सर्वपिण्डानामविशिष्टमिति सर्वपिण्डेषु विहितं भवति । तस्मात्तत्सार्वत्रिकं प्रतीयेत । इह तु यजेर्गुणभावेन श्रवणान्नैव यजौ धर्माः श्रूयन्ते । क्व[1] तर्हि ? अपूर्व इति । एवमपदिष्टो हेतुः । तस्मादनुपन्यासः सत्त्ववदिति ।।४।।

## अविभागात्तु नैवं स्यात् ।।५।। (पू०)

अथ तुशब्दः पक्षव्यावृत्तौ । नैतदेवम्, अपूर्वप्रयुक्ता धर्मा इति । यजिप्रयुक्ता एव । कुतः ? अविभागात् । यजिनाऽविभागो धर्माणाम् । प्रत्यक्षं केचिद् द्रव्ये श्रूयन्ते, केचिद्देवतायां, केचिन्मन्त्रेषु । एष च यजिः—यद् द्रव्यं देवतामुद्दिश्य मन्त्रेण त्यज्यते । स एष प्रत्यक्षो यजिना सम्बन्धो धर्माणाम् । अपूर्वेण त्वानुमानिकः ।

---

व्याख्या—जो सत्त्ववत् ऐसा कहा (इस विषय में कहते हैं)—यहां गौ रूप आकृति (=जाति) में 'पदा न स्प्रष्टव्या' आदि धर्म सुना जाता है आकृति के पदार्थ होने से । उसमें (=आकृति में) धर्म सम्भव नहीं होता । इसलिये यह आकृति सहचारी पिण्डरूप लक्षणा से जाना जाता है । जैसे– गङ्गायां घोषः (=गङ्गा में गोपालों की बस्ती) । [यहां सामीप्य-रूप लक्षणा से गङ्गातीर अर्थ जाना जाता है ।] और वह साहचर्य सब पिण्डों में सामान्य है इसलिये [उक्त धर्म] सब पिण्डों में विहित होता है । इससे उसे सार्वत्रिक जानें । यहां तो याग के गुणभाव से श्रवण होने से [प्रयाजादि धर्म] याग में नहीं सुने जाते । तो कहां सुने जाते हैं ? अपूर्व में । इस प्रकार [सत्त्ववत् हेतु] ठीक नहीं है । इससे सत्त्ववत् दृष्टान्त का कथन युक्त नहीं है ।४।।

### अविभागात् तु नैवं स्यात् ।।५।।

सूत्रार्थः– (तु) तु शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है । (अविभागात्) याग के साथ धर्मों के विभक्त न होने से । अर्थात् याग के साथ धर्मों का श्रवण होने से । (एवम्) इस प्रकार अर्थात् अपूर्व में धर्म का श्रवण है, यह (न) नहीं (स्यात्) हो सकता ।

व्याख्या—तु शब्द पक्ष की निवृत्ति के लिये है । 'अपूर्व से प्रयुक्त धर्म हैं' यह ऐसा नहीं है । याग से प्रयुक्त ही [धर्म हैं], किस हेतु से ? विभाग न होने से । धर्मों का याग से विभाग नहीं है । प्रत्यक्ष ही कुछ [धर्म] द्रव्य में सुने जाते हैं, कुछ देवता में और कुछ मन्त्रों में । यही याग [का स्वरूप] है, जो 'देवता को उद्देश करके मन्त्र से द्रव्य छोड़ा जाता है ।' यह धर्मों का याग के साथ प्रत्यक्ष सम्बन्ध है, अपूर्व के साथ तो आनुमानिक है । फल के प्रति

---

१. 'किं तर्हि' पाठान्तरम् ।

फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः—स्वर्गकामो यजेत[1] इति । आनुमानिकोऽपूर्वेण । अनुमानाच्च प्रत्यक्षं बलीयः । तस्माद्यज्यर्था धर्माः ।

ननु यजिर्भङ्गित्वात् कालान्तरे फलं दातुमसमर्थः । तत्र कृता धर्मा अनर्थका[2] एव भवन्तीत्युक्तम् ।

अत्र स्थितस्य न्यायस्याऽऽक्षेपेण प्रत्यवस्थानं क्रियते । तैलपानवदेतद्भविष्यति । यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे 'मेधास्मृतिबलपुष्ट्यादीनि[3] फलानि करोति । एवं यजिरपि करिष्यति, किं नोऽदृष्टाश्रुतेनापूर्वेण कल्पितेनेति ॥५॥

## द्व्यर्थत्वं च विप्रतिपिद्धम् ॥६॥ (पू०)

एवं च सति सर्वे धर्माः सर्वार्था भवन्ति । तथा चैन्द्राग्नादिषु प्रयाजादयः सन्ति । तत्र सौर्ये कर्मणि प्रयाजानां दर्शनमुपपद्यते—प्रयाजे प्रयाजे कृष्णलं जुहोति[4]

---

भी याग का प्रत्यक्षश्रुत गुणभाव है स्वर्गकामो यजेत में । अपूर्व के साथ [याग का] आनुमानिक [सम्बन्ध] है । अनुमान से प्रत्यक्ष बलवान् है, इसलिये याग के लिये ही धर्म है ।

(आक्षेप) याग के नाशवान् होने से वह कालान्तर में फल देने में असमर्थ है । [इस कारण] उसमें (=याग में) किये गये धर्म अनर्थक ही होते हैं, यह कह चुके हैं ।

यहां स्थित (=निर्धारित) न्याय की आक्षेप द्वारा पुनः उपस्थिति की जाती है—तैलपान के समान यह हो जायेगा । जैसे तैल का पीना, घृत का पीना [यहां पान क्रिया के] नाशवान् होने पर भी [वह] कालान्तर में बुद्धि स्मृति बल पुष्टि आदि फल देता है । इसी प्रकार याग भी [कालान्तर में फल] देगा । अदृष्ट अश्रुत कल्पित अपूर्व से हमारा क्या प्रयोजन ? अर्थात् बिना अदृष्ट की कल्पना के भी याग कालान्तर में फल देने में समर्थ है ।

विवरण—अनर्थका एव भवन्तीत्युक्तम्—द्र०—मी० २।१।५ सूत्र का भाष्य । स्थितस्य न्यायस्य—यहां मी० २।१।५ के अपूर्वास्तित्वाधिकरण में विचारित न्याय से तात्पर्य है ॥५॥

### द्व्यर्थत्वं च विप्रतिषिद्धम् ॥६॥

सूत्रार्थः—(च) और (द्व्यर्थत्वम्) दो अर्थ के लिये होना (विप्रतिषिद्धम्) विरुद्ध है ।

व्याख्या—और ऐसा होने पर सब धर्म सबके लिये होते हैं । और ऐन्द्राग्नि आदि [विकृति यागों] में प्रयाजादि श्रुत हैं । वहां (=सबका धर्म होने पर) सौर्य (=सूर्य देवता के) कर्म में प्रयाजों का दर्शन उपपन्न होता है - प्रयाजे प्रयाजे कृष्णलं जुहोति (=प्रति प्रयाज कृष्णल का होम करता है) । अन्यथा (=धर्मों को सबके लिये न मानने पर) [सौर्य-

---

१. अनुपलब्धमूलम् । द्र०—दाक्षायणयज्ञेन सुवर्गकामो यजेत । तै० सं० २।५।४।४॥

२. 'असमर्थाः' पाठान्तरम् । ३. 'मेधाघृति०' पाठान्तरम् । ४. तै० सं० २।३।२।३॥

इति। इतरथा प्रयाजाश्च विधातव्याः, प्रयाजेषु च कृष्णलहोमः। तथा च द्व्यर्थं तत्स्यात्। द्व्यर्थत्वं च विप्रतिषिद्धम्। तस्माद्यजिप्रयुक्ता धर्मा इति ॥६॥

**उत्पत्तौ विध्यभावाद् वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात् ॥७॥ (उ०)**

नैतदेवं, यजिप्रयुक्ता धर्मा इति। चोदनायां प्रवृत्तिः स्यात्। चोदनेत्यपूर्वं ब्रूमः। चोदनार्थत्वात् - अपूर्वार्थत्वादपूर्वप्रयुक्ता धर्माः। फलवत्त्वादित्युक्तो हेतुः। यत्तु प्रत्यक्षो यजिसम्बन्धो धर्माणामिति। अत्र ब्रूमः—उत्पत्तौ विध्यभावात्।

---

याग में] प्रयाजों का विधान करना होगा, और प्रयाजों के विषय में कृष्णल होम का। और ऐसा मानने पर [उक्त वाक्य] दो प्रयोजन वाला होगा। द्व्यर्थता विप्रतिषिद्ध है, इससे धर्म याग से प्रयुक्त हैं।

विवरण—ऐन्द्राग्नादिषु – द्र० पूर्व ७।१।१; पृष्ठ २०३४ विवरण। कृष्णलं जुहोति— गुञ्जा (=रत्ती) के परिमाण का सुवर्णमय गोल द्रव्य (विशेष द्र०—मी० २।२।४ व्याख्या, पृष्ठ ४५४)। द्व्यर्थं तत् स्यात्—दर्शपूर्णमास में विहित प्रयाजादि धर्म सब यागों के नहीं माने जायेंगे तो सौर्य याग में प्रयाजे प्रयाजे कृष्णलं जुहोति वाक्य के द्वारा प्रयाज का भी विधान करना होगा, और प्रयाज को उद्देश्य करके कृष्णल होम का भी। दो अर्थों के विधान में वाक्य-भेद मानना पड़ेगा। अतः द्व्यर्थता को अनुचित माना गया है ॥६॥

**उत्पत्तौ विध्यभावाद् वा चोदनायां प्रवृत्तिः स्याद् ततश्च कर्मभेदः स्यात् ॥७॥**

**सूत्रार्थः**—(वा) वा शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है। (उत्पत्तौ) याग में धर्मों की (विध्यभावाद्) विधि के न होने से (चोदनायाम्) अपूर्व अर्थ में धर्मों की (प्रवृत्तिः) प्रवृत्ति (स्यात्) होवे। (ततश्च) और उससे=अपूर्व के भेद होने से (कर्मभेदः) कर्म का भेद (स्यात्) होवे।

**विशेष**—चोदना शब्द से अपूर्व कहा जाता है। यह पूर्व अ० २, पा० १, सूत्र ५ के भाष्य में कहा और यहां भी यही अर्थ दर्शाया है। अपूर्व के भेद से कर्मों में भेद होता है, यह द्वितीय अध्याय में विस्तार से दर्शाया है।

**व्याख्या**—ऐसा नहीं है कि धर्म यागप्रयुक्त है। [धर्मों की] चोदना में प्रवृत्ति होवे। चोदना से अपूर्व को कहते हैं। चोदनार्थ होने से=अपूर्वार्थ होने से धर्म अपूर्व से प्रयुक्त है। [अपूर्व के] फलवान् होने से, यह हेतु कह चुके। और जो कहा—धर्मों का याग के साथ प्रत्यक्ष सम्बन्ध है, इस विषय में कहते हैं—उत्पत्ति में विधि का अभाव होने से। उत्पत्ति से

उत्पत्तिरिति यजिं ब्रूमः। उत्पत्तौ यजौ नास्ति विधिः। यज्यर्था धर्मा इति। केवलं यजौ श्रूयन्ते, क्रियन्ते च। नैतावता तदर्था भवन्ति। यथा, वाससि रागः श्रूयते—वासो रञ्जयतीति, वाससि च क्रियते। न चासौ तदर्थः। स्त्र्यर्थः पुरुषार्थो वा भवति। एवमिहापि यजौ श्रूयमाणाः क्रियमाणाश्चापूर्वार्था भवेयुरर्थवत्त्वाय। ततश्च कर्मभेदः स्यात्। यतोऽपूर्वार्था इति।

यश्च यजेः प्रत्यक्षः फले गुणभाव इति, स नाकृत्वाऽपूर्वं भवतीति प्राणालिको विज्ञायते। प्रणाड्याऽपि च येन क्रियते तत्कारणं भवति। यथा, गोमयैः पचति, तुषपक्वा भवन्तीति। यत्तु तैलपानवद् यजितः फलं [1]भविष्यतीति। अत्र ब्रूमः। तैलपानस्यापि न कालान्तरे फलं भवति। धातुसाम्यं तस्य फलम्। तच्च तत्कालमेव। यच्च फलं बलपुष्टयादि, तत्सम्यगाहारपरिणामाद्भवति। तस्माद् विषम उपन्यासः ॥७॥

---

याग को कहते हैं। उत्पत्ति=याग में [धर्मों की] विधि नहीं है—याग के लिये धर्म है। केवल याग में सुने जाते हैं और किये जाते हैं। इतने मात्र से उसके लिये नहीं होते हैं। जैसे वस्त्र में रङ्ग सुना जाता है—'वस्त्र को रङ्गता है' से वस्त्र में रङ्ग करता है। वह (=रङ्ग) वस्त्र के लिये नहीं। स्त्री के लिये अथवा पुरुष के लिये होता है। इसी प्रकार यहां भी याग में सुने गये और किये गये [धर्म] अपूर्व के लिये होवें अर्थवान् होने के लिये। इसलिये कर्मभेद होवे। क्योंकि [ये धर्म] अपूर्व के लिये हैं।

विवरण—फलवत्त्वादित्युक्तो हेतुः—यह मी० २।१।५ के भाष्य में कहा है। कर्मभेदः स्यात्—प्रति कर्म धर्म होवें।

व्याख्या और जो कहा फल के प्रति याग का प्रत्यक्ष गुणभाव है, वह [फल] अपूर्व को विना उत्पन्न किये नहीं होता है। इसलिये प्राणालिक (=परम्परा से होने वाला) [फल के प्रति याग का गुणभाव] माना जाता है। परम्परा से भी जो किया जाता है वह कारण होता है। जैसे—उपलों से [चावल] पकाता है, तुषों से पके हुए [चावल] होते हैं। और जो तैलपान के समान याग से फल होगा, कहा, इस विषय में कहते हैं—तैलपान का भी कालान्तर में फल नहीं होता। उसका फल धातुसाम्य है और वह [धातुसाम्य] तत्काल ही होता है। और जो बल पुष्टि आदि फल है वह सम्यक् आहार के परिणाम (=पाचन) से होता है। इससे यह दृष्टान्त विषम है।

विवरण गोमयैः पचति—पाक क्रिया प्रत्यक्ष उपलों से नहीं होती है, अपितु उपलों की जो अग्नि है उससे पाक क्रिया होती है। इसी प्रकार तुष पक्व में भी साक्षात् तुषों से ओदन

---

१. 'भवति'—पाठान्तरम्।

## यदि वाऽप्यभिधानवत्सामान्यात्सर्वधर्मः स्यात् ।।८।। (पू०)

यद्यप्यपूर्वं प्रयोजकं धर्माणां, तथाऽपि सर्वधर्मः स्यात्, स स पदार्थः। अभिधानवत्सामान्यात्। अभिधानं तावदेतेषां समानम् अपूर्वमिति । अभिधानवद्धर्मेणाप्यस्य समानेन भवितव्यम्। वाहीकवत् । यथा[1], वाहीकोऽतिथिरागतः, यवान्नमस्मै प्रक्रियतामित्युक्ते यो यो वाहीकस्तस्य तस्य यवान्नं क्रियते । यथा वा, अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः पातव्यमिति । सर्वत्र च हि, अक्ष्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः पीयते । एवमिहाप्येकस्यापूर्वस्य ये धर्माः श्रुतास्ते सर्वापूर्वाणां भवितुमर्हन्ति ।

---

आदि का पाक नहीं होता, अपितु तुषों की अग्नि से होता है। धातुसाम्यं तस्य फलम् वात पित्त कफ आदि जो धातुएं हैं, उनकी विषमता से रोग होता है। वातजनित रोग की निवृत्ति के लिये तैलादि का पान कहा गया है। उससे कुपित हुआ वात साम्यावस्था को प्राप्त होता है। यह इसका तात्पर्य है। सम्यगाहारपरिणामात्—यहां सम्यक् आहार से पथ्य रूप में लिया गया आहार अभिप्रेत है। उस आहार के सम्यक् परिपाक से बलादि प्राप्त होता है, यह तात्पर्य है ।।७।।

### यदि वाऽप्यभिधानवत् सामान्यात् सर्वधर्मः स्यात् ।।८।।

सूत्रार्थः—(वा) वा शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है। (यद्यपि) यद्यपि प्रयाजादि धर्म अपूर्व प्रयोजक होवें, तथापि (अभिधानवत्) संज्ञा के समान (सामान्यात्) अपूर्व के सामान्य होने से प्रयाजादि (सर्वधर्मः) सब यागों के धर्म (स्यात्) होवें।

व्याख्या—यद्यपि धर्मों का प्रयोजक अपूर्व है, फिर भी वे सबके धर्म होवें [अर्थात्] वह-वह पदार्थ। अभिधान के समान सामान्य होने से। 'अपूर्व' यह अभिधान इन सबका समान है। अभिधान के समान इसके (=अपूर्व के) धर्म को भी समान होना चाहिये, वाहीक के समान। जैसे 'वाहीक अतिथि आया है, इसके लिये यवान्न तैयार करो' ऐसा कहने पर जो-जो वाहीक होगा उस-उस के लिये यवान्न किया जाता है। अथवा जैसे आंख के रोग में मुद्गौदन (=खिचड़ी) खानी चाहिये, उदर रोग में दूध पीना चाहिये [ऐसा कहने पर] सर्वत्र ही आंख के रोग में खिचड़ी खाई जाती है और उदर रोग में दूध पिया जाता है। इसी प्रकार यहां पर भी एक अपूर्व के जो धर्म सुने गये हैं, वे सब अपूर्वों के होने चाहिये।

विवरण—वाहीकोऽतिथिरागतः—यद्यपि वाहीक देश का वाचक है तथापि यहां तद्देशविशिष्ट व्यक्ति कहा जाता है। महाभारत कर्ण पर्व ४४।७ में वाहीक देश का इस प्रकार वर्णन किया है—

---

१. 'तद्यथा'—पाठान्तरम्।

अपि च, अरुणपराशरा नाम शाखिनः। तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति—ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनामग्नीषोमीयस्य च, इत्यारभ्य, यावत्-सर्वाः प्रकृतिविकृतयोऽनुक्रान्ता इति । तच्चानुक्रमणमेतमेव न्यायं सूचयति। तस्मादपूर्वप्रयुक्तत्वेऽपि सर्वे धर्माः सर्वार्था इति ॥८॥

**अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥९॥**

---

**पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तरा स्थिताः। वाहीका नाम ते देशाः।**

**अर्थात्—सिन्ध सहित सतलज, व्यास, रावी, चिनाव और झेलम नदियों के मध्य जो देश हैं वे वाहीक कहाते हैं। दूसरे शब्दों में स्वतन्त्रता प्राप्ति के पूर्व का पूरा पञ्जाब।**

व्याख्या—और भी अरुणपराशर नाम के शाखा वाले हैं। उनके परिचर (= समुदाय) में स्मृतिरूप ब्राह्मण होता है—ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनाम् अग्नी-षोमीयस्य च (=जो दर्शपूर्णमास के धर्म हैं वे सब इष्टियों के और अग्नीषोमीय के हैं) यहां से लेकर यावत् सर्वाः प्रकृतिविकृतयोऽनुक्रान्ताः (= जितनी सभी प्रकृति और विकृतियां कही गयी हैं उन सबका) तक। यह अनुक्रमण (= कथन) इसी न्याय को सूचित करता है। इसलिये [धर्मों के] अपूर्व प्रयुक्त होने पर भी सब धर्म सबके लिये हैं।

विवरण—महाभाष्य तथा चरणव्यूह आदि में जो वेदों की ११३१ शाखायें कही गई हैं वे सब प्रायः भगवान् कृष्ण द्वैपायन व्यास और उनके शिष्य प्रशिष्यों के द्वारा प्रोक्त हैं। कृष्ण द्वैपायन व्यास से पूर्व भी अनेक बार शाखाओं का प्रवचन हुआ था। अतः ऐतरेय के समान अरुणपराशर शाखा उनमें सम्मिलित नहीं है। यह प्राचीन शाखा है। भट्टकुमारिल ने तन्त्रवार्तिक १।३।११ में अरुणपराशर शाखा के ब्राह्मण के विषय में लिखा है—अरुणपराशर-शाखा ब्राह्मणस्य कल्परूपत्वात् (पूना सं० पृष्ठ २३१) अर्थात् अरुणपराशर शाखा का ब्राह्मण कल्परूप है। सम्भव है भट्टकुमारिल के इस मत का आधार शबरस्वामी का 'तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति' वचन हो। महाभाष्य ४।२।६० में पाराशरकल्पिकः प्रयोग मिलता है ॥८॥

अर्थस्य त्वविभक्तत्वात् ...... स्यात् ॥९॥

सूत्रार्थः—(तु) तु शब्द पूर्वपक्ष की निवृत्ति के लिये है। (अर्थस्य) वाहीकदेशसम्बद्ध अर्थ के (अविभक्तत्वात्) एक होने से (अभिधानेषु) वाहीक पुरुषों में (तथा स्यात्) वैसा होवे। (प्रयोगस्य) 'वाहीक को यवान्न दो' वचन के (पूर्ववत्त्वात्) पूर्ववान् होने से अर्थात् इसका पूर्व भी अनेक बार प्रयोग होने से सामान्य देशसम्बन्ध जाना जाता है। (कर्मणः) प्रयाजादि

उपवर्णनापरिहारस्तावदुच्यते। यदुक्तं वाहीकवदिति। अत्र ब्रूमः। अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु। अर्थो वाहीकत्वं तद्देशसम्बन्धः, सोऽविभक्तः। सर्ववाहीकेष्वनुगत इत्यर्थः। तन्निमित्तश्च प्रीतिविशेषो न पुरुषनिमित्तः। कथं ज्ञायते? पूर्ववत्त्वात्प्रयोगस्य। पूर्ववानत्र प्रयोगः। बहुशो वाहीकाश्चावाहीकश्च भोजिताः। तत्रान्वयव्यतिरेकाभ्यां ज्ञातमेतत्, देशनिमित्तेयं यवान्नप्रियता, न पुरुषनिमित्ता। तस्मात्तथा स्यात्, वाहीकादिष्वभिधानेषु। अथेह कर्मणः शब्द-भाव्यत्वान्नान्यतः शक्यमेतज्ज्ञातुं, के कस्यापूर्वस्य धर्मा इति। शब्देन च व्यवस्थिता[1] विज्ञाता धर्माः। अपूर्वाणां च विभागः, अतः शेषाणामन्यत्र विहिता-नामन्यत्राप्रवृत्तिः स्यात् ॥९॥

## स्मृतिरिति चेत् ॥१०॥ (आ०)

अथ यदुक्तं स्मृतिरिति। तस्य कः परिहारः। ॥१०॥

---

कर्म के (शब्दभाव्यत्वात्) शब्द द्वारा ही गम्यमान होने से (विभागात्) कर्मजन्य अपूर्व के भेद होने से (शेषाणाम्) प्रयाजादि धर्मों की (अप्रवृत्तिः स्यात्) सर्वत्र प्रवृत्ति न होवे।

व्याख्या—पहले समीप में वर्णित का परिहार कहते हैं। जो कहा 'वाहीकवत्' इसमें हम कहते हैं—अर्थ के अविभक्त होने से वाहीक वाच्य पुरुषों में वैसा होवे। वाहीकत्व जो अर्थ है वह देश सम्बन्धवाला है। वह (=देश) अविभक्त है। अर्थात् सब वाहीकों में अनुगत है। और प्रीतिविशेष उसमें निमित्त है पुरुषनिमित्त नहीं। अर्थात् यवान्नप्रियता वाहीक देशनिमित्तक है न कि अभ्यागत अतिथिविशेषनिमित्तक। कैसे जाना जाता है? प्रयोग के पूर्ववान् होने से। यह [वाहीकाय यवान्नम्] प्रयोग पूर्ववान् है, अर्थात् पहले भी बहुधा प्रयुक्त है। बहुत बार वाहीक और अवाहीक पुरुषों को भोजन कराया, उस समय अन्वय व्यतिरेक से यह जाना कि यवान्नप्रियता देशनिमित्तक है, न कि पुरुषनिमित्तक। उससे वैसा होवे। वाहीकादि के कथन में [सामान्यार्थत्व होवे]। और यहां कर्म के शब्दभावी होने से अन्य प्रकार से नहीं जाना जा सकता कि कौन किस अपूर्व के धर्म हैं। शब्द से व्यवस्थित हुए धर्म जाने जाते हैं। और अपूर्वों का विभाग जाना जाता है। इसलिये अन्यत्र विहित [प्रयाजादि] शेष धर्मों की अन्यत्र प्रवृत्ति न होवे ॥९॥

## स्मृतिरिति चेत् ॥१०॥

**सूत्रार्थः**—(स्मृतिः) स्मृति प्रमाण होवे (इति चेत्) ऐसा कहो तो।

व्याख्या—और जो कहा स्मृति है, उसका क्या परिहार है ॥१०॥

---

१. 'व्यवस्थया विहिता धर्माः'—पाठान्तरम्।

**न पूर्ववत्त्वात् ॥११॥ (आ० नि०)**

पूर्ववती हीयं स्मृतिः। चोदकं धर्मग्राहकं वक्ष्यति। **विध्यन्तो वा प्रकृतिवद्'** इति। तेन प्रापितानां धर्माणामयमनुवादः। एतन्न्यायपूर्विका, नाप्राप्तानां विधायिका। यत्कारणं व्यवस्था धर्माणामेतेन न्यायेन भवति ॥११॥

**अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥१२॥**

इदं निगमनसूत्रम्। निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम्। तदिद-मुच्यते—

यस्मादेवं, तस्मादर्थस्य अग्न्यन्वाधानादेः, शब्दभाव्यत्वात्, प्रतिप्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात्। यथा—**गन्धर्वाप्सरसो वा एतमुन्माद-यन्ति य उन्मादयत्येता वै गन्धर्वाप्सरसो यद् राष्ट्रभृतम्। तस्मै स्वाहा ताभ्यः**

---

**न पूर्ववत्त्वात् ॥११॥**

सूत्रार्थः—(न) यह स्मृति प्रमाण नहीं है (पूर्ववत्त्वात्) पूर्ववती होने से। अर्थात् प्रकृतिवद् विकृतिः कर्त्तव्या वचन से प्राप्त हुए धर्मों का स्मृति अनुवाद करती है।

व्याख्या—यह स्मृति पूर्ववती है। धर्म को ग्रहण करानेवाले चोदक वचन को कहेंगे—विध्यन्तो वा प्रकृतिवत् (मी० ७।४।१०)। अर्थात् प्रकृति के समान विकृति में विधि होती है। उससे प्राप्त कराये गये धर्मों का यह अनुवाद है। यह स्मृति न्यायपूर्विका है, अप्राप्तों की विधायिका नहीं है। जिस कारण से धर्मों की व्यवस्था होती है वह इस न्याय से होती है ॥११॥

**अर्थस्य शब्दभाव्यत्वात् ······ स्यात् ॥१२॥**

सूत्रार्थः—(अर्थस्य) अग्न्यन्वाधानादि अर्थ के (शब्दभाव्यत्वात्) शब्दभावी होने से और (प्रकरणनिबन्धनात्) प्रतिप्रकरण [उनका] निबन्धन होने से (शब्दात्) शब्द से (एव) ही (अन्यत्र भावः) अन्यत्र होना (स्यात्) होवे अर्थात् अन्यत्र प्राप्ति होवे।

व्याख्या—यह निगमन सूत्र है। प्रतिज्ञा और हेतु के पुनः कथन को निगमन कहते हैं। वह इस प्रकार कहा जाता है—

जिस कारण ऐसा है, इससे अग्न्यन्वाधानादि अर्थ के शब्दभावी (=शब्द से गम्यमान) होने से और प्रतिप्रकरण निबन्धन होने से शब्द (=अतिदेशवचन) से ही उनका अन्यत्र भाव होवे। जैसे—गन्धर्वाप्सरसो वा एतम् उन्मादयन्ति य उन्मादयत्येता वै गन्धर्वाप्सरसो यद् राष्ट्रभृतम्। तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति(=गन्धर्व और अप्सरायें निश्चय

---

१. मी० ७।४।१०॥

**स्वाहेति जुहोति**' इति, अग्निप्रकरण उत्पन्नानां राष्ट्रभृतामुद्वाहे उपदेश एतेषाम् —**राष्ट्रभृतो जुहोत्यभ्यातानां जुहोति**' इति । असत्येतस्मिन्वचने यथाधिकारं व्यवतिष्ठेरन् धर्मा इति । एवं च सति अधर्मकाण्यैन्द्राग्नादीनि । तदर्थमुत्तरोऽध्यायषट्कः प्रारब्धव्य इति ।

तत्र सप्तमेन तावदैन्द्राग्नादीनां कर्मणां धर्माः सन्तीत्युच्यते । ते चातिदेशेनेति । अतिदेशो नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशः । यथा—देवदत्तस्य भोजनविधिं कृत्वा शालिसूपमांसापूपैर्देवदत्तो भोजयितव्य इति । तमेव विधिं यज्ञदत्तेऽतिदिशति—देवदत्तवद्यज्ञदत्तो भोजयितव्य इति । श्लोकमप्युदाहरन्ति—

**प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।**
**धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः ॥** इति ॥

स च नाम्ना वचनेन वा । तत्र नाम त्रिविधमातिदेशकं, कर्मनाम, संस्कार-

---

ही उसको उन्मादित करती हैं, जो उन्मत्त होता है। ये ही गन्धर्व अप्सराएं हैं जो राष्ट्रभृत् हैं— तस्मै स्वाहा ताभ्यः स्वाहा से जो होम करता है) । अग्नि के प्रकरण में उत्पन्न राष्ट्रभृत् यज्ञों का विवाह में उपदेश है इनका—राष्ट्रभृतो जुहोति अभ्यातानां जुहोति वचन से । इस वचन के न होने पर धर्म यथाधिकार व्यवस्थित होवें। इस प्रकार होने पर ऐन्द्राग्नादि धर्मरहित हैं इसके लिये (=ऐन्द्राग्नों की धर्मवत्ता बतलाने के लिये) अगले ६ अध्याय प्रारम्भ करने चाहिये ।

उनमें पहले सातवें से ऐन्द्राग्नादि कर्मों के धर्म हैं, यह कहा जाता है। और वे धर्म अतिदेश से [प्राप्त होते हैं] । अतिदेश उसे कहते हैं जो अन्यत्र विहित धर्म हैं उसका (=कहे हुए स्थान का) अतिक्रमण करके अन्यत्र उनका निर्देश करना। जैसे देवदत्त के भोजन का विधान करके ओदन, दाल, मांस, अपूपों से देवदत्त को भोजन कराना चाहिये। उसी विधि को यज्ञदत्त में अतिदेश करते हैं—'देवदत्त के समान यज्ञदत्त को भोजन कराना चाहिये ।' [इस विषय में] श्लोक उद्धृत करते हैं—जिस प्रकृत कर्म से उसके समान कर्मों में धर्म का जिससे कथन होवे, वह अतिदेश की स्थिति है। और वह (=अतिदेश) नाम अथवा वचन से होता है। उसमें नाम तीन प्रकार से अतिदेश करने वाला होता है—कर्मनाम संस्कारनाम और

---

१. तै० संहितायां (३।४।८।४), 'उन्माद्यत्येते खलु वै' इति भेदेन पाठः । यद्वा भाष्ये पाठभ्रंशः संजातः स्यात् ।

२. अनुपलब्धमूलम् । द्र० —राष्ट्रभृत इच्छञ्जयाभ्यातानांश्च जानन् । पार० गृह्य १।५।७।।

स्वरस्य कवतीष्वभावात्। नन्वसन्नेवासावतिदेशेन भाव्यते। उच्यते। भावयितुमपि न शक्यते। न ह्यभिवत्यक्षराणामभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः। यदि भाव्येत, न कवत्यो भवेयुः। न चेद् भाव्यते, न भूतः। कवतीषु रथन्तरं गायतीत्येतस्याः श्रुतेः [1]पदानां परस्परेणाभिसम्बन्धो न स्यात्। तस्मान्न स्वरस्यातिदेशः ॥८॥

## स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥९॥

तुशब्दः पक्षान्तरपरिग्रहे। यद्यभिवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु—**कवतीषु रथन्तरं गायति** इति। कथम्? तदुच्यते। इह, कवतीषु रथन्तरं गायतीत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः। कवतीषु यद् रथन्तरं तद्गायतीत्येका, रथन्तरं यत् तत् कवतीषु गायतीत्यपरा। तयोर्येषा द्वितीया-रथन्तरं यत् तत् कवतीषु गायतीति। सा स्वरस्य सामत्वे न सम्भवतीत्युक्तम्। न ह्यभि-

---

[अर्थ के] न होते हुए ही यह अतिदेश से उत्पन्न किया जाता है। (समाधान) [अतिदेश से अभिवतीयों के स्वर की कवतीयों में] उत्पत्ति नहीं की जा सकती है [अर्थात् अभिवती ऋचाओं के अक्षरों का अभिव्यञ्जक नाद कवती ऋचाओं में उत्पन्न नहीं किया जा सकता है]। यदि [कवतीयों में अभिवतीयों का नाद] उत्पन्न किया जाये तो वे कवती ऋचाएं न होवें। यदि [अन्य का अन्य में नाद] उत्पन्न नहीं किया जाता है तो वह भूत (=पूर्वतः उत्पन्न हुआ) नहीं है। कवतीषु रथन्तरं गायति इस श्रुति के पदों का परस्पर सम्बन्ध न होवे। इससे स्वर का अतिदेश युक्त नहीं है ॥८॥

स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥९॥

सूत्रार्थः—(तु) तु शब्द पक्षान्तर के लिये है। (स्वरः) अभिवती ऋचाओं का स्वर (उत्पत्तिषु) कवती ऋचाओं के उच्चारण में (स्यात्) होवे (मात्रावर्णाविभक्तत्वात्) अभिवती ऋचाओं में और कवती ऋचाओं में मात्रा और वर्ण के अविभक्त=समान होने से।

व्याख्या—तु शब्द पक्षान्तर की स्वीकृति में है। यदि अभिवती ऋचाओं के स्वर का कवती ऋचाओं में प्रदेश उपपन्न नहीं होता है तो अनुवाद होवे—कवतीषु रथन्तरं गायति। किस हेतु से? इस विषय में कहते हैं—यहां कवतीषु रथन्तरं गायति (=कवती ऋचाओं में रथन्तर का गान करता है). इस वाक्य की दो वचनव्यक्तियां (=दो अभिप्राय) होती हैं। प्रथम—कवती ऋचाओं में जो रथन्तर उसका गान करता है। द्वितीय—जो रथन्तर है उसको कवती ऋचाओं में गाता है। इन दोनों में जो यह द्वितीय 'जो रथन्तर उसे कवती ऋचाओं में गाता है।' वह स्वर के साम होने पर सम्भव नहीं है, ऐसा कह चुके। अभिवती ऋचाओं का

---

१. 'पदान्तरैरभिसम्बन्धः'—पाठान्तरम्।

वतीस्वरः कवतीषु समावेशयितुं शक्य इति। पूर्वा तु सम्भवति। कवतीषु यद् रथन्तरं, तद् गायतीति। ननु साऽपि न सम्भवति। न हि कवतीषु रथन्तरमस्ति। अतः परमुच्यते—स्वरस्तूत्पत्तिषु स्यात्। स्वरस्त्वभिवतीस्वरः, कवतीनामुत्पत्तिषु—उच्चारणेषु स्यात्। कथम्? मात्रावर्णाविभक्तत्वात्। बह्वो मात्रा वर्णाश्चाभिवतीनां कवतीनां चाविभक्ताः, अभिवतीष्वपि विद्यन्ते कवतीष्वपि। सोऽसावभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते, तस्यानुवादोऽयं घटते—कवतीषु रथन्तरं गायति इति। तस्मात् स्वरस्यानुवादः ॥९॥

**लिङ्गदर्शनाच्च ॥१०॥**

लिङ्गं च दृश्यत एतस्मिन्नर्थे। अस्ति रथन्तरमुत्तरयोरिति। किं तल्लिङ्गं भवति? एवमाह—**रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठ**[1] इति। यच्च विद्यमानं न दृश्यते, तद्दर्शनाय यत्नः[2]

---

**स्वर कवती ऋचाओं में समाविष्ट नहीं किया जा सकता। पहला अर्थ तो सम्भव है। कवती ऋचाओं में जो रथन्तर है उसका गान करता है। (**आक्षेप**) यह अर्थ भी सम्भव नहीं है। कवती ऋचाओं में रथन्तर साम नहीं है। (**समाधान**) इस पर आगे कहते हैं—स्वर तो उत्पत्तियों में होवे। स्वर अर्थात् अभिवती का स्वर तो कवती ऋचाओं की उत्पत्ति=उच्चारण में [सम्भव] होवे। किस हेतु से? मात्रा वर्ण के अविभक्त होने से। बहुत सी मात्राएं और वर्ण अभिवती ऋचाओं के और कवती ऋचाओं के अविभक्त हैं, अर्थात् अभिवती ऋचाओं में भी विद्यमान हैं और कवती ऋचाओं में भी। अतः यह अभिवती ऋचाओं का स्वर कवती ऋचाओं के सामान्य वर्णों में समवेत है। उसका यह अनुवाद हो सकता है—**कवतीषु रथन्तरं गायति**। इसलिये स्वर का अनुवाद है ॥९॥**

**लिङ्गदर्शनाच्च ॥१०॥**

**सूत्रार्थः—(लिङ्गदर्शनात्) लिङ्ग के दर्शन से (च) भी अभिवती ऋचाओं के स्वर का कवती ऋचाओं में अनुवाद जाना जाता है।**

व्याख्या—**इस अर्थ में लिङ्ग भी देखा जाता है—'उत्तर ऋचाओं में रथन्तर हैं'। वह लिङ्ग कौन सा है? इस प्रकार कहते हैं—**रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठः **(=उत्तर ऋचाओं में रथन्तर को नहीं देखता हूं, ऐसा जानकर विश्वामित्र ने तप किया। बृहत् को उत्तर ऋचाओं में नहीं देखता हूं, ऐसा जानकर वसिष्ठ ने तप किया)। जो विद्यमान वस्तु नहीं दिखाई पड़ती है, उसके दर्शन के लिये**

---

१. अनुपलब्धमूलम्। २. 'प्रयत्नः'—पाठान्तरम्।

क्रियते। यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति। तस्मादस्त्युत्तरयो रथन्तरं बृहच्च। तयोरनुवाद इति ॥१०॥

**अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥११॥**

तुशब्दः पक्षं व्यावर्तयति। नैतदेवम्, स्वरस्यानुवाद इति। कुतः? एवं सत्युत्तरासु विकारो न कश्चिच्छ्रुतो भवति। तदा उत्तरा यथाश्रुताः प्रयोक्तव्याः, यथा स्वाध्यायकाले श्रुताः। तत्र **रथन्तरमुत्तरयोर्गायति** इत्येतदनुवादमात्रमप्रवृत्तिविशेषकरमनर्थकमेवाऽऽपद्यते। अतो न स्वरस्यानुवादो युक्तः ॥११॥

**शब्दानां चासामञ्जस्यम् ॥१२॥**

रथन्तरादीनां च सामशब्दानामसामञ्जस्यं स्यात्। **रथन्तरमुत्तरयोः,**

---

यत्न किया जाता है। जैसे—'घट को नहीं देखता हूं' ऐसा जान कर दीपक जलाता है। शशविषाण को नहीं देखता, [ऐसा जानकर कोई दीपक नहीं जलाता]। इससे उत्तर ऋचाओं में रथन्तर और बृहत् साम हैं, उनका यह अनुवाद है [अर्थात् कवती ऋचाओं में रथन्तर का अनुवाद जाना जाता है] ॥१०॥

**अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥११॥**

**सूत्रार्थः**—(तु) तु शब्द पूर्व उक्त पक्ष की निवृत्ति करता है। यदि उत्तरा ऋचाओं में रथन्तर आदि स्वर विद्यमान होवें तो (उत्तरासु) उत्तर ऋचाओं में (विकारस्य) विकार के (अश्रुतेः) श्रवण न होने से (यथाश्रुति) जैसी स्वाध्यायकाल में ऋचाएं श्रुत हैं, वैसी ही क्रतुकाल में भी प्रयोक्तव्य होवें।

**व्याख्या**—तु शब्द पूर्व उक्त पक्ष को निवृत्त करता है। 'स्वर का अनुवाद है' ऐसा नहीं है। किस हेतु से? ऐसा होने पर उत्तर ऋचाओं में कोई विकार नहीं सुना जाता है। तब उत्तरा ऋचाएं [क्रतुकाल में] यथाश्रुत (=यथापठित) उच्चरित होवें, जैसे स्वाध्यायकाल में श्रुत हैं। उस अवस्था में रथन्तरमुत्तरयोर्गायति अनुवादमात्र प्रवृत्तिविशेष का करनेवाला न होने से अनर्थक ही होवे। इससे स्वर का अनुवाद युक्त नहीं है ॥११॥

**शब्दानां चासामञ्जस्यम् ॥१२।**

**सूत्रार्थः**—(च) और (शब्दानाम्) रथन्तरादि साम शब्दों का (असामञ्जस्यम्) सामञ्जस्य नहीं होगा।

**व्याख्या**—रथन्तर आदि साम शब्दों का सामञ्जस्य न होवे-रथन्तरमुत्तरयोः, बृहदु-

**बृहदुत्तरयोः** इति । कथम् ? तदुच्यते । अयं रथन्तरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्याऽवस्थिते स्वरविशेषे प्रयुक्तः । स एकदेशे भिन्नानुपूर्व्ये चासमञ्जसो भवति । तस्मान्नैतद्युक्तम्—स्वरस्य सामशब्दः, तस्य चानुवाद इति । अत्राऽऽह । एवं भवता सर्वे पक्षा निरुद्धाः । ततः किमप्रवृत्तेरेवेति ? उच्यते । ऋच एव प्रदेशो भवतु । ननूक्तं, न शक्या ऋच ऋगन्तरे प्रदेष्टुमिति । बाढं, देशलक्षणा भविष्यति । **कवतीषु रथन्तरं गायति** इत्युच्यते । न च शक्यते कवतीषु रथन्तरं गातुम् । तत्र देशलक्षणा भवति कवतीदेश इति । यथा—अग्नौ तिष्ठति, कूपे तिष्ठतीति । धर्मलक्षणा वा स्यात् । रथन्तरधर्मा वा कवतीषु रथन्तरशब्देनातिदिश्यन्ते । यथा—रथन्तरे **प्रस्तूयमाने पृथिवीं मनसा ध्यायेद्** इत्येवमादयः । यथाऽऽचार्ये प्रोषिते, आचार्यानी भवतामाचार्य इत्याचार्यशुश्रूषाऽऽचार्यान्यामतिदिश्यते ॥१२॥

अपि तु कर्मशब्दः स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद्
विकारो ह्यविशिष्टोऽन्यैः ॥१३॥ (सि०)

---

त्तरयोः शब्दों का । किस प्रकार से? यह रथन्तर शब्द अथवा बृहत् शब्द स्वर के सामशब्दत्व में स्वरसमुदाय में आनुपूर्वी से अवस्थित स्वरविशेष में प्रयुक्त है । [अर्थात् सामशब्द का स्वर अर्थ स्वीकार करने पर भी आनुपूर्वी से अवस्थित स्वरविशेष में ही प्रयुक्त होता है । ] वह [ साम शब्द] एकदेश में और भिन्न आनुपूर्वी में समञ्जस नहीं होता । इसलिये यह युक्त नहीं है कि साम शब्द स्वर का वाचक है और उसका अनुवाद है । ( आक्षेप ) इस प्रकार से आपने सभी पक्ष निरुद्ध =दूषित कर दिये । ऐसी अवस्था में [ यह रथन्तरादि शब्द ] किस प्रवृत्तिवाला होगा ?(समाधान)ऋचा के ही प्रदेश में होवे ।(आक्षेप) अभी कहा था —ऋचाएं ऋगन्तर (=भिन्न ऋचाओं) में प्रदेशित (=आदिष्ट)नहीं की जा सकतीं । (समाधान) ठीक है। देशविषयक लक्षणा हो जायेगी —कवतीषु रथन्तरं गायति ऐसा कहते हैं,और कवती ऋचाओं में रथन्तर साम नहीं गाया जा सकता । अतः इस विषय में देशविषयक लक्षणा होगी—कवती ऋचाओं के देश (=स्थान) में । जैसे—अग्नौ तिष्ठति, कूपे तिष्ठति(=अग्नि के समीप कूप के समीप रहता है)। अथवा धर्मनिमित्तक लक्षणा होवे । रथन्तर के धर्म कवती ऋचाओं में रथन्तर शब्द से अतिदिष्ट किये जाते हैं । जैसे—रथन्तर के गान के समय पृथिवीं मनसा ध्यायेत् (=पृथिवी का मन से ध्यान करे ) इत्यादि । जैसे आचार्य के देशान्तर में जाने पर आचार्यानी भवतामाचार्यः ( आचार्यानी ही आपकी आचार्या है ) निर्देश में आचार्य की शुश्रूषा आचार्यानी में अतिदिष्ट होती है ॥१२॥

अपितु कर्मशब्दः स्याद्...... ह्यविशिष्टोऽन्यैः ॥१३॥

---

१. मी० २।१।३६॥

अपि तु नैवं स्यात्—ऋचः सामशब्दः, तस्याश्च प्रदेश इति। तथा देशलक्षणा धर्मलक्षणा वाऽऽश्रयणीया। अगतिश्चैषा यल्लक्षणापरिग्रहः। किं तर्हि? कर्मशब्दः स्यात्। रथन्तरादिर्गानाख्यस्य संस्कारकर्मणो वाचकः। कुतः? उक्तो न्यायः—गीतिषु सामाख्या[1], इत्यत्र। तत्र गीतिविशिष्टायामृचि एष शब्दो दृष्टः। न चागृहीतविशेषणा विशेष्ये बुद्धिरुपपद्यते। तस्माद्विशेषणं तावदभिधीयते। विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः। अतो नास्ति ऋचः शब्देन संस्पर्श इति। तेनैव न्यायेन गीतिनामधेयमिति ब्रूमः।

किं च प्रसिद्धग्रहणत्वात्। अयं च गायतीति शब्दो गानक्रियायां प्रसिद्धः। का पुनरसौ? शब्दस्योच्चारणविशेषः। गायति गानं करोतीति। तद्ग्रहणश्च रथन्तरादिशब्दः। तद्वचन इत्यर्थः। तेन समुच्चारणाद् द्वितीयासामर्थ्याच्च।

---

सूत्रार्थः - पूर्व उक्त पक्ष ठीक नहीं है (अपितु) किन्तु (कर्मशब्दः) रथन्तरादि गान रूप संस्कार कर्म का वाचक (स्यात्) होवे। (प्रसिद्धग्रहणत्वात्) प्रसिद्ध गान के ग्रहण से (भावः) भाव [विशेषण रूप गान] (अर्थः) अर्थ है। [यह गानरूप] (विकारः) विकार (अन्यैः) अन्य लौकिक गानों से (अविशिष्टः) अविशिष्ट=तुल्य है। अर्थात् लौकिक गान में जैसे ह्रस्व वर्णों का दीर्घत्व और दीर्घों का ह्रस्वत्व आदि विकार देखा जाता है, उसी प्रकार साम में भी विकार देखा जाता है।

व्याख्या—किन्तु ऐसा नहीं होवे—ऋक् का कहनेवाला साम शब्द है और उसके [ऋचा के] प्रदेश (=स्थान) में प्रयुक्त होता है। तथा देशलक्षणा अथवा धर्मलक्षणा का आश्रयण करना चाहिये [यह भी युक्त नहीं है।] अगतिकगति है जो लक्षणा का स्वीकार करना है। तो क्या होवे? कर्म शब्द होवे। रथन्तर आदि गानरूप संस्कार कर्म का वाचक है। किस हेतु से? न्याय कह चुके हैं – गीतिषु सामाख्या (२।१।३६ सूत्र में)। इस अवस्था में गीतिविशिष्ट ऋचा में यह साम शब्द देखा गया है। विशेषण को जिसने ग्रहण नहीं किया है ऐसी बुद्धि विशेष्य में उत्पन्न नहीं होती है। इसलिये पहले विशेषण का कथन करते हैं। और विशेषण का ज्ञान होने पर सहचरित विशिष्ट अर्थ में बुद्धि उत्पन्न होती है। इसलिये [रथन्तर आदि शब्दों का] ऋचा के साथ संस्पर्श नहीं है। इसी न्याय से [साम शब्द] गीति का वाचक है, ऐसा कहते हैं।

और भी, प्रसिद्ध [अर्थ के] ग्रहण से भी। यह 'गायति' शब्द गान क्रिया में प्रसिद्ध है। वह गान क्रिया क्या है? शब्द का उच्चारण विशेष। गायति का अर्थ होता है—गान करता है। और उस गान का ग्रहण करानेवाला रथन्तर शब्द है, अर्थात् गान का वाचक है। इससे [गायति शब्द के साथ] उच्चारण से और [रथन्तर आदि में] द्वितीया विभक्ति के

---

१. मी० २।१।३६॥

यथा—आसारितकं गायतीति, वर्धमानकं गायतीति। ननु शब्दवचनेनापि समुच्चारणं भवति—गाथां गायति, ऋचं गायतीति? सत्यम्। विपरिणम्य तु शब्दं—गानेन ऋचं संस्करोतीति यथानिपतितेनार्थेन न सम्बध्यते, गानं करोति ऋचमिति। तस्माद् गीतिवचनः। इतश्च गीतिवचनः। कुतः? विकारो ह्यविशिष्टोऽन्यैः। विकारश्चात्र ऋग्द्रव्यस्य दृश्यते। ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वम्, विवृतानां संवृतत्वं, संवृतानां विवृतत्वम्। सोऽविशिष्टोऽन्यैः संस्कारकर्मभिः। यथाऽवहन्तिना व्रीहीणां तण्डुलीभावः, पिषिणा तण्डुलानां पिष्टीभावः। तस्माच्छब्दानां संस्कारो गानाख्यो रथन्तरादिभिः शब्दैरुच्यते। तस्यायं प्रदेशो **रथन्तरमुत्तरयोर्गायतीत्येवमादिः** ॥१३॥

**अद्रव्यं चापि दृश्यते ॥१४॥**

---

सामर्थ्य से [गान विशेष का वाचक होता है]। जैसे—आसारितक को गाता है, वर्धमानक को गाता है। (आक्षेप) शब्दवचन के साथ [जहां केवल शब्दों का कथन होता है] भी [गायति शब्द का] उच्चारण होता है—गाथां गायति, ऋचं गायति। (समाधान) सत्य है। किन्तु शब्द को विपरिणमित करके [गायति शब्द का प्रयोग होता है]—गान से ऋचा को संस्कृत करता है, यथाप्राप्त अर्थ के साथ सम्बन्ध नहीं होता—गानं करोति ऋचम् (=गाता हैं ऋचा को) ऐसा। इससे [साम शब्द] गीति का वाचक है। किस हेतु से? [सामगान में ऋचाओं का विकार] अन्य विकारों से विशिष्ट नहीं है। यहां ऋग्द्रव्य का विकार देखा जाता है। ह्रस्व अक्षरों की दीर्घता और दीर्घ अक्षरों की ह्रस्वता। विवृत वर्ण का संवृतत्व और संवृत वर्णों का विवृतत्व। यह विकार अन्य संस्कार कर्मों से भिन्न नहीं है। जैसे अवहनन क्रिया से व्रीहियों का तण्डुलीभाव और पेषणक्रिया से तण्डुलों का चूर्णीभाव होता है। इससे गानरूपी शब्दों का संस्कार रथन्तर आदि शब्दों से कहा जाता है। उसका यह निर्देश है—रथन्तरमुत्तरयोर्गायति इत्यादि ॥१३॥

**विवरण—विकारश्चात्र ऋग्द्रव्यस्य**—यहां ऋचा को द्रव्य कहा है। भाष्यकार अगले सूत्र में कहेंगे कि 'छन्दोग द्रव्य शब्द का ऋक् में व्यवहार करते हैं।' वैयाकरण स्फोटरूप शब्द को द्रव्य मानते हैं और ध्वनि को उसका गुण। महाभाष्य (१।१।७०) में कहा है—स्फोटः शब्दो ध्वनिः शब्दगुणः[1]। मीमांसक स्फोटरूप शब्द को नहीं मानते। अतः यहां शब्दसमूहरूप जो एकत्वेन प्रतीयमान ऋगादि समुदाय विशेष है उसे द्रव्य मानकर उसके एकदेश में गुणान्तर की कल्पना की है ॥१३॥

**अद्रव्यं चापि दृश्यते ॥१४॥**

**सूत्रार्थः**—(च) और साम (अद्रव्यम्) ऋचा रहित (अपि) भी (दृश्यते) देखा जाता है।

---

१. द्र०—स्फोटः शब्दो ध्वनिस्तस्य व्यायामादुपजायते। महाभाष्यदीपिका पृष्ठ ४।

अपि चाद्रव्यं साम दृश्यते । द्रव्यशब्दश्छन्दोगैर्ऋक्ष्वाचरितः । अद्रव्यम्—अनृचमित्यर्थः । अनृचं साम दृश्यते—**प्रजापतेर्हृदयमनृचं गायति** इति । प्रजापतिहृदयं नाम साम । तदनृच्युत्पन्नम् । यदि ऋचि सामशब्दः, कथं प्रजापतिर्हृदयमनृचं स्यात् । अथ गीतावेव[1] सामशब्दस्ततो विनाऽपि ऋचा गीतिर्भवति । तत्रैतदुपपद्यते प्रजापतेर्हृदयमनृचं गायति इति । तस्मादपि गीतिः साम ॥१४॥

ननूक्तं, संस्कारकर्मत्वेऽनर्थकोऽकर्मकाले प्रयोग इति । तत्र ब्रूमः—

**तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥१५॥**

तस्य क्रियाऽकर्मकाले ग्रहणार्था, शिक्षितुमभ्यसितुं च । नानार्थेषु नानाभूतेष्वर्थेषु, भिन्नेष्वित्यर्थः । विरूपित्वात् । आश्रयभेदाद् विविधरूपं यद् गानं भवति,

---

**व्याख्या—और भी—द्रव्य रहित साम देखा जाता है । द्रव्य शब्द छन्दोगों (=सामविधियों) द्वारा ऋचाओं में व्यवहृत है । अद्रव्य अर्थात् ऋग् रहित । ऋग्रहित साम देखा जाता है—**प्रजापतेर्हृदयमनृचं गायति **(=प्रजापति हृदय नामक साम का बिना ऋचा के गान करता है) । प्रजापति हृदय नामका साम है; वह अनृक् में उत्पन्न है । यदि ऋचा में साम शब्द व्यवहृत होवे तो प्रजापतिहृदय नामक साम ऋक्रहित कैसे होवे ? और यदि गीति अर्थ में ही साम शब्द होवे तो बिना ऋचा के गान होता है । उस अवस्था में यह उपपन्न होता है—**प्रजापतेर्हृदयमनृचं गायति **। इससे भी साम का अर्थ गीति है ॥१४॥**

व्याख्या—जो यह कहा—[ साम के ] **संस्कार कर्म होने पर कर्मकाल से अन्यत्र अनर्थक प्रयोग होगा, इस विषय में कहते हैं—**

**तस्य च क्रिया ·· विधानात् ॥१५॥**

**सूत्रार्थः—साम के संस्कार कर्म होने पर भी (तस्य) उस साम का (क्रिया) गान अकर्मफल में (ग्रहणार्था) प्रयोग के लिये=अभ्यास के लिए (च) भी उपपन्न होता है (नानार्थेषु) अनेक प्रकार के अर्थों=ऋचाओं में (विरूपित्वात्) आश्रय भेद से अनेक रूपों वाला होने से । (आसाम्) रथन्तरादि संज्ञाओं का (अर्थः) अर्थ (अलौकिकः) लोक से अविज्ञात है, अतः (विधानात्) विधान=उपदेश से ही इनका स्वरूप ज्ञेय है ।**

व्याख्या—**उस (=साम) की क्रिया [ गान ] कर्म काल से अन्यत्र ग्रहण के लिये है, सीखने के लिये और अभ्यास के लिये । नाना अर्थों में=नानाभूत अर्थों में अर्थात् भिन्न अर्थों में विरूपी=भिन्नरूपवाला होने से । आश्रय के भेद से विविध रूपवाला जो गान होता है वह प्रति**

---

१. 'गीतेः साम' इति पाठान्तरम् ।

तत् प्रत्यृचं शिक्षितव्यमभ्यसितव्यं च प्रयोगप्राशुभावाय। भूमिरथिकवत्। तद्यथा—भूमिरथिको भूमौ रथमालिख्य योग्यतां[1] करोति। सा तस्य[2] प्रयोगकाले सौकर्यमुत्पादयति। अर्थो ह्यासां रथन्तरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः। यथा—अवहन्त्यादीनाम्। कुतः? विधानात्। विधीयते ह्यसौ शिष्योपाध्यायसम्बन्धेन—एवं रूपं रथंतरं भवतीति। न लौकिको विज्ञायते। तस्मान्न परिचोदनैषा, अकर्मकाले प्रयोगादिति ॥१५॥

अथ यदुक्तम्—संज्ञापृथक्त्वादिति। तत्रोच्यते—

**तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥१६॥**

तस्मिन् एकस्मिन्नपि गानाख्ये संस्कारे संज्ञाविशेषा भवेयुः। कुतः? विकारपृथक्त्वात्। [3]तुल्येऽपि गानत्वे गानविशेषो भवति, गानविशेषाच्च संज्ञा-

---

ऋचा सीखने योग्य और अभ्यासयोग्य होता है। प्रयोगकाल(=यज्ञ)में शीघ्रता[से प्रयोग करने]के लिये भूमिस्थ रथ वाले के समान। जैसे—भूमिस्थ रथवाला भूमि पर रथ का आलेखन करके योग्यता को सम्पादित करता है। उसकी वह योग्यता प्रयोग काल में (=युद्ध के समय) सौकर्य उत्पन्न करती है। इन रथन्तर आदि संज्ञाओं का अर्थ लौकिक व्यवहार में सिद्ध नहीं है। जैसा कि अवहनन आदि का। किस हेतु से? विधान करने से। यह [ रथन्तर आदि संज्ञा रूप ] अर्थ शिष्य उपाध्याय सम्बन्ध से जाना जाता है—इस रूपवाला रथन्तर होता है। यह अर्थ लौकिक नहीं जाना जाता है [अर्थात् लोक से नहीं जाना जाता है]। इससे यह आक्षेप 'अकर्मकाल में प्रयोग होने से' उपपन्न नहीं होता ॥१५॥

विवरण—भूमिरथिकवत्—इसका तात्पर्य यह है कि जैसे युद्धकाल में रथादि की स्थापना की जाती है और युद्ध किया जाता है। उसके शिक्षण के लिये शिक्षुक भूमि पर रथ आदि का लेखन करके सीखने का प्रयत्न करता है, जिससे युद्धकाल में शीघ्रता से शत्रु के रथ आदि पर प्रहार कर सके ॥१५॥

व्याख्या—जो यह कहा—'संज्ञा के पृथक् होने से' इस विषय में कहते हैं—

**तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥१६॥**

सूत्रार्थः—(तस्मिन्) गान रूप संस्कार के एक होने पर भी (संज्ञाविशेषाः) भिन्न-भिन्न संज्ञाएं (स्युः) होवें, (विकारपृथक्त्वात्) विकारों के पृथक्-पृथक् होने से।

व्याख्या—उस एक गानरूप संस्कार में भी संज्ञाविशेष होवें। किस हेतु से? विकार के पृथक् पृथक् होने से। गानत्व के समान होने पर भी गानविशेष होता है और गान के विशेष

---

१. 'योग्यां' इति पाठान्तरम्। २. 'तस्य योग्या प्र' इति पाठान्तरम्।

३. 'तुल्येऽपि गाने विशेषो भवति' इति पाठान्तरम्।

पृथक्त्वम्। यथा—आसारितकं, वर्धमानकगीतिः। अन्यथालक्षणाऽऽसारितकगीतिः, अन्यथालक्षणा वर्धमानकगीतिः। एवमिहाप्यन्यथालक्षणा रथन्तरगीतिः, अन्यथालक्षणा बृहद्गीतिः। तस्मात्संज्ञापृथक्त्वम् ॥१६॥

योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥१७॥

---

से संज्ञा का पार्थक्य देखा जाता है। जैसे—आसरितकगीति और वर्धमानकगीति। अन्य प्रकार की आसारितक गीति होती है और अन्य प्रकार की वर्धमानक गीति। इसी प्रकार यहां भी रथन्तर गीति अन्यरूपा है और बृहद् गीति अन्यरूपा। इस कारण संज्ञा का पार्थक्य है ॥१६॥

विवरण—आसारकगीति और वर्धमानकगीति के लक्षण प्राचीन गानशास्त्रों से ज्ञेय हैं। हमें इसका ज्ञान नहीं है ॥१६॥

योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥१७॥

सूत्रार्थः—(च) और (योनिशस्याः) जो साम की योनिभूत ऋचा भी है और शस्त्रसाधनीभूत ऋचा भी है उसके साथ (तुल्यवत्) समानरूप से (इतराभिः) अयोनिशस्या ऋचाओं का (विधीयन्ते) विधान किया जाता है।

विशेष—शस्या ऋचाएं वे होती हैं जिनका 'शंसति' शब्द से विधान किया जाता है। शंसन नाम शस्त्र का है। शस्त्रों के पाठ में गीति के विना ऋचाओं का पाठ होता है[1]। योनि शब्द से वे ऋचाएं कही जाती हैं, जिनमें कोई साम दृष्ट हो (=उत्पन्न हुआ हो)। साम का प्रयोग स्तोत्र कहलाता है। इसमें ऋचाओं का गीत्यात्मक पाठ होता है।[2] सूत्र का तात्पर्य यह है कि जैसे याम्याः शंसति (=यम देवतावाली ऋचाओं का पाठ करता है), शिपिविष्टवतीः शंसति (=शिपिविष्ट शब्दवाली ऋचाओं का पाठ करता है) में जिस प्रकार शंसन की जानेवाली ऋचाओं का देवता और शब्दविशेष का निर्देश करके ऋचाओं का शंसन कहा है, उसी प्रकार रथन्तरस्य योनिमनुशंसति (=रथन्तर साम की योनिभूत ऋचा का अनुशंसन करता है), बृहतो योनिमनुशंसति (=बृहत् साम की योनिभूत ऋचा का अनुशंसन करता है) वाक्यों में साम की योनिभूत ऋचा का निर्देश करके शंसन कहा है। अर्थात् योनिशस्या ऋचाओं का और अयोनिशस्या ऋचाओं का समानरूप से 'शंसति' क्रिया से विधान देखा जाता है। इससे जाना जाता है कि 'शंसति' और 'स्तौति' शब्दों के अर्थ भिन्न-भिन्न व्यवस्थित हैं। प्रगीत मन्त्रवाक्यों में

---

१. शस्त्र का लक्षण 'अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्।' अर्थात् बिना गान किये गये मन्त्र से किसी गुणवान् देवता-आदि में स्थित गुण का कथन करना शस्त्र कहा जाता है।

२. स्तोत्र का लक्षण—'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्।' अर्थात् गान विशिष्ट मन्त्र से गुणिनिष्ठ गुण का कथन करना स्तोत्र कहाता है।

योनिश्चासौ शस्या च योनिशंस्या। योनिशस्याश्च ऋचः तुल्यवदितराभिरयोनिशस्याभिर्विधीयन्ते। **याम्याः शंसति, शिपिविष्टवतीः शंसति, रथन्तरस्य योनिमनुशंसति, बृहतो योनिमनुशंसति** इति। का तत्र[1] तुल्यता। शंसतिशब्देन विधानम्[2]। इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ। प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः। यथा—**प्रउगं शंसति, निष्कैवल्यं शंसति** इति। **आज्यैः स्तुवते, पृष्ठैः स्तुवते** इति। अतः शंसतिशब्देन विधानादप्रगीतामृचं रथन्तरस्य योनिं दर्शयति। यदि च गीतिः रथन्तरं, ततस्तस्याप्रगीता ऋग्योनिः। अन्यथाऽयं व्यपदेशो नोपपद्यते-**रथन्तरस्य योनिम्** इति। तस्माद् गीतिषु सामाख्या ॥१७॥

---

स्तौति शब्द का प्रयोग होता है और अप्रगीत मन्त्रवाक्यों में शंसति का। तात्पर्य यह है कि साम शब्द का अर्थ गीति ही है।

**व्याख्या**—योनिशस्या शब्द का विग्रह है—योनिश्चासौ शस्या [अर्थात् जो ऋचा साम की योनि भी होवे और शस्त्र में शंसनीय भी होवे]। योनिशस्या ऋचा का इतर(=अन्य) अयोनिशस्या ऋचाओं के साथ समान विधान किया जाता है। याम्याः शंसति(=यम देवतावाली ऋचाओं का शंसन करता है), शिपिविष्टवतीः शंसति(=शिपिविष्ट शब्दवाली ऋचाओं का शंसन करता है), रथन्तरस्य योनिमनुशंसति (=रथन्तर साम की योनिभूत ऋचा का शंसन करता है), बृहतो योनिमनुशंसति (=बृहत् साम की योनिभूत ऋचा का शंसन करता है)। [इनमें प्रथम दो उद्धरण अयोनिभूत ऋचाओं के शंसन सम्बन्धी हैं और उत्तर के दो उद्धरण सामविशेष के योनिभूत ऋचा के अनुशंसन सम्बन्धी हैं।] (आक्षेप) इन में क्या तुल्यता है? (समाधान) 'शंसति' शब्द से विधान करना। यहां ये दोनों स्तौति और शंसति शब्द स्तुति अर्थ में समान होने पर भी व्यवस्थित विषय वाले हैं। प्रगीत मन्त्रवाक्यों में 'स्तौति' शब्द प्रयुक्त होता है और अप्रगीत वाक्यों में 'शंसति' शब्द। जैसे—प्रउगं शंसति (=प्रउग संज्ञक शस्त्र का पाठ करता है), निष्कैवल्यं शंसति (=निष्कैवल्य संज्ञक शस्त्र का पाठ करता है), आज्यैः स्तुवते (=आज्य संज्ञक स्तोत्रों से स्तुति करता है), पृष्ठैः स्तुवते (=पृष्ठ संज्ञक स्तोत्रों से स्तुति करता है)। इससे [रथन्तर साम की योनिभूत ऋचा का] 'शंसति' शब्द से विधान करने से रथन्तर की योनिभूत [अप्रगीत] ऋचा को निर्दिशित करता है। यदि गीति रथन्तर होवे तो उसकी अप्रगीत ऋक् योनि हो सकती है। अन्यथा यह निर्देश उपपन्न नहीं होता है—रथन्तर की योनि। इससे गीति में साम संज्ञा है ॥१७॥

---

१. 'नु' इति पाठान्तरम्। २. 'अभिधानम्' इति पाठान्तरम्।

## अयोनौ चापि दृश्यतेऽतथायोनि ॥१८॥

अयोनौ च साम दृश्यते—**स्थाल्यां सक्त्ववधीयत इत्याहुर्यद् बृहद्गायत्रीषु क्रियतेऽपि चैनां रुजति, न चास्यां सम्भवति** इति । बृहतो बृहती योनिः । तस्य गायत्रीषु प्राप्तिर्नास्ति, यदि ऋचः सामशब्दः । अथ नु गीतेः, ततः सा बृहद्गीतिर्गायत्रीषु वचनात् प्राप्ता । तस्या अयमनुवादो घटते—**यद् गायत्रीषु क्रियते** इति । अतथायोनि च साम दर्शयति । यादृशी यस्य योनिस्ततोऽन्यादृशे-**यो वै विच्छन्दसि सामोहति स ऋचं संशृणाति, साम वा विलिशति, साम संशृणाति, ऋचं विलिशति** इति । यतरद् 'अल्पीयस्तस्य विलेशः'[1]। यतरद् वर्षीयस्तस्य संशरः'[2] । तच्च गीतावेव साम्नि युज्यते, न ऋचि । ऊहतिशब्दश्च गीतावेव समर्थो न ऋचि । ऋक्चेत्

---

**अयोनौ चापि दृश्यतेऽतथायोनि ॥१८॥**

सूत्रार्थः—(च) और (अयोनौ) साम की योनिभूत ऋचा में (अपि) भी साम(दृश्यते) देखा जाता है और (अतथायोनि) योनि से भिन्न ऋचा वाला साम भी देखा जाता है ।

विशेष 'अतथायोनि' पद कुतूहलवृत्ति के सूत्रपाठ में नहीं है ।

व्याख्या—अयोनि में भी साम देखा जाता है—स्थाल्यां सक्त्ववधीयत इत्याहुर्यद् बृहद्गायत्रीषु क्रियतेऽपि चैनां रुजति, न चास्यां सम्भवति (=स्थाली में सत्तु रखा जाता है, ऐसा कहते हैं जो बृहत् साम को गायत्री छन्द में किया जाता है और इस [गायत्री ऋक्] को पीड़ा पहुंचाता है और न ही इसमें सम्भव होता है) । बृहत् साम की बृहती छन्द [वाली ऋचा] योनिभूत है । उसकी गायत्री [छन्दवाली ऋक्] में प्राप्ति नहीं है । यदि ऋचा का वाचक साम शब्द होवे और यदि गीति का वाचक होवे तो उससे वह बृहत्[साम सम्बन्धी] गीति गायत्री छन्दों [वाली ऋचाओं] में वचन से प्राप्त होवे । उसका यह अनुकथन उपपन्न होता है—यद् गायत्रीषु क्रियते । और अतथायोनि साम दर्शाता है अर्थात् जिस प्रकार की इस साम की जो योनि है,उससे भिन्न रूपवाली में—यो वै विच्छन्दसि सामोहति स ऋचं संशृणाति, साम वा विलिशति, साम संशृणाति, ऋचं विलिशति (=जो निश्चय से भिन्न छन्द में साम का ऊह करता है, वह ऋचा का संकोच करता है, अथवा साम का विस्तार करता है । साम का संकोच करता है वा ऋचा का विस्तार करता है)। साम और ऋचा में जो छोटा होगा उसका विलेश=विस्तरीकरण होगा और जो बड़ा होगा उसका संकोच । यह गीति में साम शब्द के प्रयोग में युक्त होता है ऋचा में नहीं । ऊहति शब्द भी गीति अर्थ में ही समर्थ है ऋचा में नहीं । यदि ऋक् (=साम) होवे तो वह जैसी आम्नाय में पठित है

---

१. पूना संस्करणे 'वसीयः' पाठः, काशीसंस्करणे 'वर्षीयः' पाठः । उभावप्यपपाठौ ।

२. 'अल्पस्य विस्तीर्णकरणं विलेशः, महतः संकोचः संशरः' इति भाष्यदीपाख्यायां व्याख्यायाम् (हस्तलेख, पृष्ठ ४४८) ।

सैव यथाम्नायं पठ्यते । तत्र नास्त्यूहप्रसङ्गः । तस्मादपि गीतौ सामशब्दः ॥१८॥

यदुक्तं तस्य क्रिया ग्रहणार्थेति । तत्र परिचोद्यते—

ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥१९॥

एकार्थ्ये नास्ति वैरूप्यमिति । रथन्तरगीतेर्बृहद्गीतिरर्थान्तरम् । तेन रथन्तरगीतौ गृहीतायां बृहद्गीतिरगृहीता भवतीति युक्तो रथन्तरे गृहीते बृहतः शिक्षार्थमकर्मकाले प्रयोगः । रथन्तरगीतेस्त्वेक एवार्थः । तस्य योन्यां प्रयोगे

---

वैसी पढ़ी जावे । उसमें ऊह का प्रसङ्ग नहीं है । इसलिये भी गीति में साम शब्द है ॥१८॥

**विवरण**—'संशृणाति' का अर्थ है बड़े को संकुचित करना । संकुचित करने में बड़े के कुछ अंश का लोप=हनन होता है ( शृ हिंसायाम् ) और 'विलिशति' का अर्थ है अल्प को विस्तीर्ण करना (विगत-लिश अल्पीभावे=अल्पीभाव को छोड़ना) । तात्पर्य यह है कि अधिक अक्षरों वाली अनुष्टुप् (३२ अक्षर) अथवा बृहती (३६ अक्षर) छन्दवाली ऋचा में उत्पन्न साम का अल्प अक्षरवाली गायत्री (२४ अक्षर) छन्द में गान करता है तो बड़े साम के ८ या १२ अक्षरों में गेय भाग का संशर—संकोच करना पड़ेगा अर्थात् उसका लोप होगा । इसी प्रकार गायत्री (२४ अक्षर) छन्दस्क ऋचा में उत्पन्न साम=गीति का अनुष्टुप् वा बृहतीछन्दस्क ऋचा में गीति का विलेश=विस्तार करना होगा । अन्यथा अनुष्टुप् के ८ अक्षर और बृहती के १२ अक्षर सामरहित रह जायेंगे ।

यतरल्पीयस्तस्य विलेशः—काशी संस्करण में यहां 'वर्षीयः' पाठ है और पूना संस्करण में 'वसीयः' दोनों ही प्रसङ्गानुसार उपपन्न नहीं होते अतः हमने शाबरभाष्य की 'क्षीरसमुद्रवासिमिश्र' विरचित 'भाष्यदीप' नाम्नी व्याख्या (हस्तलिखित पृष्ठ ४४८) के अनुसार 'अल्पीयः' पाठ शोधा है । अथवा यहां 'लघीयः' या 'अवर्षीयः' पाठ होना चाहिये ॥१८॥

**व्याख्या**—और जो कहा—उस (=गीति) की क्रिया ग्रहण के लिये है, उस विषय में आक्षेप किया जाता है—

ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥१९॥

**सूत्रार्थः**—(ऐकार्थ्ये) [गीतिरूप] एक अर्थ होने पर (वैरूप्यम्) विरूपता (नास्ति) नहीं है (इति चेत्) ऐसा कहो तो ।

**व्याख्या**—ऐकार्थ्य होने पर विरूपता नहीं है । रथन्तर गीति से बृहद्गीति अर्थान्तर है । इस कारण रथन्तर गीति के ग्रहण करने पर बृहत् गीति गृहीत नहीं होती । इससे रथन्तर के ग्रहण करने पर बृहत् गीति को सीखने के लिये अकर्मकाल में प्रयोग युक्त है । [परन्तु] रथन्तर गीति का तो एक ही अर्थ है । उस (=रथन्तर गीति) का प्रयोग योनिभूत

शिक्षिते पुनरुत्तरासु न शिक्षितव्यम् । तास्वकर्मकाले प्रयोगः संस्कारकर्मत्वे न युक्तो भवति । तस्मान्न संस्कारस्य सामशब्द इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥१९॥

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥२०॥

स्याद् वैरूप्यम् । कुत एतत् ? अर्थान्तरेष्वनिष्पत्तेः । ऋगन्तरेष्वाश्रय[1]भेदाद् भिद्यते, यथा पाके । यथैक एवायमर्थः पाको नाम । तस्यार्थान्तरे वैरूप्यं भवति— अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य । येनौदनपाको गृहीतो नासावशिक्षित्वा गुडं पक्तुं जानाति । तस्मात् तस्याप्यकर्मकाले प्रयोग उपपद्यते ॥ २०॥

शब्दानां च सामञ्जस्यम् ॥२१॥

---

ऋचा में सीख लेने पर फिर उत्तर ऋचाओं में सीखना आवश्यक नहीं है। अतः उन (= उत्तर ऋचाओं) में अकर्मकाल में प्रयोग संस्कार कर्म होने पर युक्त नहीं होता है। इस से संस्कार का वाचक साम शब्द है, इस प्रतिज्ञा के स्थिर होने पर [प्रस्तुत] सूत्र से आक्षेप करता है ॥१९॥

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥२०॥

सूत्रार्थः—(अर्थान्तरेषु) भिन्न ऋचाओं में आश्रयभेद से (अनिष्पत्तेः) निष्पत्ति न होने से (स्यात्) अर्थान्तरभेद होवे। (यथा) जैसे (पाके) पाक में। अर्थात् जैसे पाक क्रिया के एक होने पर भी विभिन्न पदार्थों की पाक क्रिया भिन्न होने से उनको सीखना आवश्यक होता है।

व्याख्या—विरूपता होवे। किस हेतु से ? अर्थान्तर में निष्पत्ति न होने से। भिन्न भिन्न ऋचाओं में आश्रय के भेद से [गान में] भेद होता है, जैसे पाक में। जैसे पाकरूपी अर्थ एक ही है [फिर भी] उसकी अर्थान्तर में भिन्नता होती है। ओदन का पाक अन्य प्रकार का है और गुड़ का पाक अन्य प्रकार का है। जिस व्यक्ति ने ओदन का पाक सीख लिया है वह बिना सीखे गुड़ को पकाना नहीं जानता। इससे [उत्तर ऋचाओं में] भी उस (=गान) का अकर्मकाल में प्रयोग उपपन्न होता है ॥२०॥

शब्दानां च सामञ्जस्यम् ॥२१॥

सूत्रार्थः—(शब्दानाम्) कवती तथा रथन्तर आदि शब्दों का (सामञ्जस्यम्) साम-

---

१. 'आश्रयभेदात् । यथा'—पाठान्तरम् ।

एवं च सामशब्दानामृक्शब्दानां च सामञ्जस्यं भवति। **कवतीषु रथन्तरं गायति** इति, कवतीशब्द ऋच एव वक्ष्यति, रथन्तरशब्दश्च साम। इतरथा कवती-शब्दे वा देशलक्षणा स्यात्, रथन्तरशब्दे वा धर्मलक्षणा। तस्माद् गीतौ सामशब्द इति ॥२१॥

**इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमाध्यायस्य द्वितीयः पादः ॥**



---

ञ्जस्य (च) भी उपपन्न होता है।

**व्याख्या**—और इस प्रकार साम शब्दों का और ऋक् शब्दों का सामञ्जस्य उपपन्न होता है। कवतीषु रथन्तरं गायति में कवती शब्द ऋचाओं को ही कहेगा और रथन्तर शब्द साम को ही। अन्यथा कवती शब्द में देशरूपी लक्षणा होगी। अथवा रथन्तर शब्द में धर्मरूपी लक्षणा। इससे गीति में ही साम शब्द है ॥२१॥

# सप्तमाध्याये तृतीयः पादः

## [अग्निहोत्रादिनाम्नां धर्मप्रदेशकत्वाधिकरणम् ॥१॥]

नाम्ना धर्मप्रदेशं वक्ष्याम इति, आदौ[1] प्रतिज्ञातं सोऽयमुच्यते । कुण्डपायिनामयने श्रूयते—मासमग्निहोत्रं जुहोति[2] इति । तत्रैतत् समधिगतं, नैयमिकादग्निहोत्रात् कर्मान्तरमेतदिति[3] । अधुनाऽग्निहोत्रशब्दश्चिन्त्यते, कथमयं प्रयुक्त इति ? तदर्थमारभ्यते—

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥१॥ (उ०)**

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यादिति । उक्तमादौ

---

व्याख्या—नाम के द्वारा धर्म का अतिदेश करेंगे ऐसी आरम्भ में प्रतिज्ञा की है (अ० ७ के आरम्भ में, पृष्ठ २०५२) उस विषय में कहते हैं । कुण्डपायिनामयन में सुना जाता है—मासमग्निहोत्रं जुहोति (=महीना भर अग्निहोत्र करता है) । उस विषय में यह जाना गया है (=कह चुके हैं) कि नियमित (=नैत्यिक) अग्निहोत्र से यह [मासाग्निहोत्र] कर्मान्तर है (मी० २।३। अधि० ११) । सम्प्रति अग्निहोत्र शब्द पर विचार किया जाता है कि यह [प्रकृत उद्धरण में] कैसे प्रयुक्त हुआ ? इसके लिये आरम्भ करते हैं—

**उक्तं क्रियाभिधानं ... ... स्यात् ॥१॥**

सूत्रार्थः—अग्निहोत्र शब्द (क्रियाभिधानम्) क्रिया=कर्म का वाचक है, यह (उक्तम्) कह चुके हैं । (तच्छ्रुतौ) उस अग्निहोत्र शब्द के श्रवण होने पर (अन्यत्र) अन्यत्र=कुण्डपायिनामयन के अग्निहोत्र में (विधिप्रदेशः) धर्म का अतिदेश (स्यात्) होवे । अर्थात् नैत्यिक अग्निहोत्र के जो धर्म हैं, उनका अग्निहोत्र नाम से कुण्डपायिनामयन के अग्निहोत्र में भी अग्निहोत्र के धर्मों का अतिदेश होवे ।

व्याख्या—[अग्निहोत्र शब्द] क्रिया का कहने वाला है उसका श्रवण होने पर अन्यत्र धर्म का अतिदेश होवे । आदि में कह चुके हैं [कि अग्निहोत्र शब्द] क्रिया को कहनेवाला है

---

१. सप्तमाध्यायस्यादौ, पृष्ठ २०५२ ।

२. द्र०—मासमग्निहोत्रं जुह्वति । कात्या० श्रौत २४।४।२४; आप० श्रौत २३।१०।६ (अत्र 'जुहोति' पाठान्तरमपि) ।

३. मी० अ० २, पा० ३, अधि० ११, इत्यत्रेति शेषः ।

क्रियाभिधानं कर्मनामधेयमग्निहोत्रशब्द इति—तत्प्रख्यं चान्यशास्त्रम्[१] इत्यत्र। तस्यान्यत्र श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेशः स्यात्—धर्मप्रदेशः। नैयमिकस्याग्निहोत्रस्य ये धर्मास्तेऽस्मिन्ननेन नाम्नाऽतिदिश्येरन्। किं कारणम्? उच्यते। परशब्दोऽयं परत्र वृत्तः[२]। परशब्दस्य परत्र वृत्तौ तद्वद्भावो गम्यते। स यत्र विज्ञातो भवति तत्रानूद्यते। यथा—'सिंहो देवदत्तः' इति। यत्राविज्ञातस्तत्र विधीयते। यथा—'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इति। इह चाविज्ञातोऽस्य जुहोतेरग्निहोत्रवद् भावः। तस्मात् स विधीयते। मासमग्निहोत्रं जुहोति[३]=अग्निहोत्रवज्जुहोतीति। कथं पुनरसति वतिप्रत्यये वत्यर्थः शक्योऽवगन्तुमिति? उच्यते। साहचर्यात्। अग्निहोत्रशब्दोऽयं कर्मणा सम्बद्धस्तत्सहचरितदोहनादिधर्मवत्तां लक्षणया शक्नोति गमयितुम्। शक्नोति चेद् गमयितुं, प्रदेष्टुमपि शक्ष्यति[४]। एवमन्तरेणापि वतिं वत्यर्थः शक्योऽवगन्तुमिति ॥१॥

---

अर्थात् कर्म की संज्ञा है अग्निहोत्र शब्द—तत्प्रख्यं चान्यशास्त्रम् (=अग्निहोत्र में अग्निदेवतारूप गुण का कथन करनेवाला अन्य शास्त्र है) इस सूत्र (मी० १।४।४) में। उस (=अग्निहोत्र) का अन्यत्र कुण्डपायिनामयन में 'जुहोति' में श्रवण होने पर विधि का प्रदेश होवे (=धर्म का अतिदेश होवे)। नैत्यिक अग्निहोत्र के जो धर्म हैं, वे इस (=मासाग्निहोत्र) में इस (=अग्निहोत्र) नाम से अतिदिष्ट किये जायें। क्या कारण है? पर शब्द (=अन्यार्थ को कहनेवाला) यह अग्निहोत्र शब्द अन्यत्र प्रवृत्त है। अन्य शब्द के अन्यत्र प्रयोग में तद्वद्भाव जाना जाता है। वह जिस अर्थ में विज्ञात होता है उस अर्थ में अनूदित होता है। जैसे 'सिंहो देवदत्तः' में। जहां पर अविज्ञात होता है वहां विधान किया जाता है। जैसे 'इन पिष्टपिण्डों के सिंह बनाओ'। यहां (=कुण्डपायिनामयन के अग्निहोत्र में) इस 'जुहोति' का अर्थ अविज्ञात है, इसलिये अग्निहोत्रवद्भाव होता है। इससे उस (=तद्वद्भाव) का विधान किया जाता है। मासमग्निहोत्रं जुहोति [का अर्थ है] अग्निहोत्र के समान होम करता है। (आक्षेप) वति प्रत्यय के न होने पर वति प्रत्यय का अर्थ कैसे जाना जा सकता है? (समाधान) साहचर्य से। यह अग्निहोत्र शब्द कर्म के साथ सम्बद्ध है। इससे वह इस के सहचरित दोहन आदि धर्मवत्ता को लक्षणा से बोधित करा सकता है। यदि बोधित करा सकता है तो अतिदेश भी कर सकता है। इस प्रकार विना भी वति प्रत्यय के वति का अर्थ जाना जा सकता है ॥१॥

विवरण—कथं पुनरसति वतिप्रत्यये—इस विषय में महाभाष्य १।२।१ में यही बात इस प्रकार कही है—अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा—एष ब्रह्मदत्तः। अब्रह्मदत्तं

---

१. मी० अ० १, पा० ४, सू० ४॥ २. 'प्रवृत्तः' इति पाठान्तरम्।
३. 'जुहोतीति' इति पाठान्तरम्। ४. 'शक्नोति' इति पाठान्तरम्।

## अपूर्वे वाऽपि भागित्वात् ॥२॥ (पू०)

वाऽपीति विपर्यासेन प्रयुङ्क्ते। अपि वेत्यर्थः। अपि वाऽपूर्वे एते उभे अपि कर्मणी स्यातां, न कौण्डपायिनामयनीयो जुहोतिर्नैयमिकपूर्वः। साधारणं च नामधेयमुभयोः। कुतः? भागित्वात्। अयमपि जुहोतिर्भागी एतस्य नामधेयस्य। यथैव तत्र, 'अग्निहोत्रं जुहोति'[1] इति समुच्चारणम्, एवमिहापि। तत्र तुल्ये समु-

---

ब्रह्मदत्त इत्याह। ते मन्यामहे ब्रह्मदत्तवदयं भवतीति(=विना वति प्रत्यय के भी अतिदेश जाना जाता है। जैसे यह ब्रह्मदत्त है। अब्रह्मदत्त को ब्रह्मदत्त कहा है। इससे जाना जाता है कि यह ब्रह्मदत्तवत् है) ॥१॥

### अपूर्वे वाऽपि भागित्वात् ॥२॥

सूत्रार्थः—(अपि वा) अथवा (अपूर्वे) नैत्यिक अग्निहोत्र और कुण्डपायिनामयन का अग्निहोत्र दोनों अपूर्व कर्म होवें (भागित्वात्) 'अग्निहोत्र' शब्दभाक् होने से। अर्थात् जैसे 'अग्निहोत्रं जुहोति' में अग्निहोत्र शब्द का प्रयोग है, वैसे 'मासमग्निहोत्रं जुहोति' में भी अग्निहोत्र शब्द के होने से यह भी अपूर्व कर्म का वाचक होवे। यह आक्षेपसूत्र है।

विशेष - सूत्रस्थ वाऽपि शब्द का 'अपि वा' रूप में स्थान परिवर्तन भाष्यकार के अनुसार जानना चाहिये। यह 'अपि वा' पूर्व पक्ष की निवृत्ति के लिये है। सूत्र में शब्दों का क्रमविपर्यास किन्हीं विशेष कारणों से होता है। इस के लिये हमारा व्याकरणशास्त्र का इतिहास भाग १, पृष्ठ २५०, २५१ (चतुर्थ सं०) देखें।

हमारे विचार में विना स्थान परिवर्तन के भी सूत्रार्थ इस प्रकार हो सकता है—

(वा) 'वा' शब्द पूर्व पक्ष की निवृत्ति के लिये है। (अपूर्वे) नैत्यिक अग्निहोत्र और कुण्डपायिनामयन का मासाग्निहोत्र दोनों अपूर्व कर्म हैं। दोनों के (अपि भागित्वात्) अग्निहोत्र शब्द के भागी होने से अर्थात् उभयत्र समान रूप से अग्निहोत्र शब्द का प्रयोग होने से।

इस सूत्रार्थ में 'अपि' यह सम्भावन अर्थ में है। यह भागित्व हेतु की शक्ति के द्योतनार्थ है। जैसे अपि सिञ्चेत् मूलकसहस्रम् में अपि शब्द मूलक सहस्र के सेचन की शक्तिद्योतनार्थ है।

व्याख्या—[सूत्रकार ने] वा अपि शब्दों का विपर्यास से प्रयोग किया है। अपि वा (=अथवा) यह अर्थ है। अथवा ये दोनों भी अपूर्व कर्म होवें, कुण्डपायिनामयनवाला जुहोति (=अग्निहोत्र)नैत्यिकपूर्व नहीं है। दोनों का साधारण नामधेय है। किस हेतु से?भागी होने से। यह (=मासाग्निहोत्र संबन्धी) जुहोति भी इस (=अग्निहोत्र) नामधेय का भागी है। जैसे वहां 'अग्निहोत्रं जुहोति' का उच्चारण है। इसी प्रकार यहां भी है। उभयत्र तुल्य उच्चारण होने पर उसी (=नैत्यिक) अग्निहोत्र का नामधेय है इस (=मासाग्निहोत्र)का नहीं, इस में

---

१. तै० सं० १।५।९।

च्चारणे तस्यैवैतन्नामधेयं नास्येत्यत्र विशेषहेतुर्नास्ति। तस्मादुभयोः साधारणं नामेति नास्ति धर्मप्रदेशः ॥२॥

नैतद्युक्तम्। कुतः?

नाम्नस्त्वौत्पत्तिकत्वात् ॥३॥ (उ०)

औत्पत्तिको हि नामिनाम्नोः सम्बन्धः। यन्नाम यस्मिन्नर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धं, तस्मिन्नेव सदा विज्ञेयं, नान्यत्र च। तथाऽव्यवस्थायां शब्दार्थे विश्वासो न स्यात्। उक्तम्—'अन्यायश्चानेकार्थत्वम्'[1] इति। यदा च नोभयार्थस्तदा नैयमिकं तावदाह। तत्सादृश्यविधानार्थं चेतरत्रापि प्रयोग उपपद्यत इति नास्तीतराभिधानत्वे हेतुः। तस्माद् विधिप्रदेशः स्यात् ॥३॥

---

विशेष हेतु नहीं है। इससे दोनों का साधारण नाम है। धर्म का अतिदेश नहीं है ॥२॥

विवरण—जुहोतिर्नैयमिकपूर्वः—इस का तात्पर्य यह है कि कुण्डपायिनामयन में श्रुत 'मासमग्निहोत्रं जुहोति' वचनस्थ 'जुहोति' नैत्यिक अग्निहोत्र की आकांक्षा रख के प्रयुक्त नहीं हुआ है ॥२॥

व्याख्या—यह (=पूर्व उक्त पक्ष) युक्त नहीं है। किस हेतु से?

नाम्नस्त्वौत्पत्तिकत्वात् ॥३॥

सूत्रार्थः—(तु)तु शब्द पूर्व उक्त पक्ष की व्यावृत्ति के लिये है। (नाम्नः)नाम का [अर्थ के साथ सम्बन्ध] (औत्पत्तिकत्वात्) नित्य होने से।

विशेष—औत्पत्तिक शब्द का अर्थ नित्य है, यह मीमांसा १।१।५ के भाष्य में कह चुके हैं।

व्याख्या—नाम और नामी का सम्बन्ध नित्य ही है। जो नाम जिस अर्थ में नित्य सम्बन्ध से प्रसिद्ध है, उसी में सदा जानना चाहिये, अन्य अर्थ में नहीं। तथा अव्यवस्था होने पर शब्दार्थ के विषय में विश्वास नहीं होवे। कहा है—अन्यायश्चानेकार्थत्वम् (=एक शब्द का अनेक अर्थ होना अन्याय है) (द्र०—मीमांसाभाष्य १।३।३०)। और जब दोनों अर्थ नहीं हैं तब पहले नैयमिक अग्निहोत्र को कहेगा। और उसके सादृश्य से विधान के लिये अन्यत्र भी प्रयोग उपपन्न होता है। इससे अन्य (=मासाग्निहोत्र) के कथन में हेतु नहीं है, इस से विधि का अतिदेश होवे ॥३॥

विवरण—नान्यत्र च का अर्थ 'अन्यत्र नहीं' यह भी हो सकता है। आगे 'यदा च नोभ-

---

१. इदं वचनं भाष्यकारो बहुत्रोद्धृतवान्। यथा—१।३।३०; २।१।१२; ३।२।१; ५।४।१४; ६।१।२२। अयमेवार्थः ७।३।१४; १०।१।२७,४२ भाष्ये शब्दान्तरैरुक्तः।

[1]अत्राऽऽह । कस्मात् पुनस्तन्नामधेयमिदमिह प्रयुक्तमित्युच्यते, न पुनरेतन्नामधेयं तत्रेति ? तत आह—

**प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् ॥४॥ (उ०)**

नैयमिकेऽग्निहोत्रे प्रत्यक्षो गुणसंयोगः । प्रत्यक्षविहिता धर्माः सन्ति । इत्थं दोग्धि, इत्थं श्रपयति, चतुरुन्नयति, खादिर्यग्निहोत्रसमिद्भवति, इत्थं जुहोति, एतस्मिन् काले जुहोतीत्येवं प्रत्यक्षाद् गुणसंयोगान्नैयमिकस्य तन्नामधेयम् । इह प्रयुज्यमानं दोहनादिक्रियाभिधानं स्यात् । धर्मप्रदेशकमित्यर्थः । अस्य पुनर्जुहोतेर्न केचिद्धर्माः सन्ति । तदभावे—तेषां धर्माणामभावे, अप्रसिद्धं स्यात् । न प्रज्ञायेत, किमर्थमयमग्निहोत्रशब्द इह प्रयुक्त इति ।

एवं वा । प्रत्यक्षो गुणसंयोगो, नैयमिकस्य द्रव्यदेवतासंयोगः । दध्ना

---

यार्थः' के निर्देश से ऊपर निर्दिष्ट व्याख्या भी युक्त है ॥३॥

व्याख्या—इस विषय में कहते हैं—फिर किस हेतु से आप 'यह नामधेय यहां (=मासाग्निहोत्र में) प्रयुक्त हुआ है' ऐसा कहते हैं और यह (=मासाग्निहोत्रवाला अग्निहोत्र) नाम वहां (='अग्निहोत्रं जुहोति' में) प्रयुक्त नहीं हुआ ? इस विषय में कहते हैं—

**प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् ॥४॥**

सूत्रार्थः - नैयमिक अग्निहोत्र में (प्रत्यक्षात्) प्रत्यक्ष (गुणसंयोगात्) गुण के संयोग होने से (क्रियाभिधानम्) कर्म को कहनेवाला (स्यात्) होवे । (तदभावे) गुण के संयोग के अभाव में (अप्रसिद्धम्) अप्रसिद्ध (स्यात्) होवे ।

व्याख्या—नैयमिक(=नियम से होनेवाले नित्य) अग्निहोत्र में प्रत्यक्ष गुण संयोग है । उसमें प्रत्यक्षविहित धर्म हैं । इस प्रकार से दुहता है, इस प्रकार से पकाता है, चार बार उन्नयन करता है, अग्निहोत्र की समित् खैर की होती है, इस प्रकार होम करता है, इस काल में होम करता है इत्यादि प्रत्यक्ष गुणों के संयोग से नैयमिक होम का वह (=अग्निहोत्र) नामधेय है । यहां प्रयुक्त हुआ [अग्निहोत्र से] दोहनादि क्रिया को कहनेवाला होवे । अर्थात् धर्मों का अतिदेशक होवे । और इस 'जुहोति' के कोई धर्म नहीं है । उनके अभाव में=उन धर्मों के अभाव में [यह अग्निहोत्र शब्द] अप्रसिद्ध होवे । यह नहीं जाना जाये कि किसलिये यह अग्निहोत्र शब्द यहां प्रयुक्त हुआ है ।

अथवा, प्रत्यक्ष गुणसंयोग है,नैयमिक का द्रव्यदेवता के साथ संयोग है । दध्ना जुहोति

---

१. 'तत्राऽऽह' इति पाठान्तरम् ।

जुहोति,[1] पयसा जुहोति,[2] अग्नये च प्रजापतये च सायं जुहोति[3] इति। एतस्मात् प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात्। कर्मनामधेयम्। इत्थंरूपो जुहोतिरग्निहोत्राख्य इति। [4]अथेतरजुहोते रूपं नास्ति। तदभावेऽप्रसिद्धं स्यात्, न ज्ञायेत कीदृशं तदग्निहोत्रमिति। ननु मासोऽस्य रूपं भविष्यति। न मासः कर्माङ्गं, कर्तृधर्मः सः। अपि च, अग्निहोत्रं तु मासे विधीयते, न मासेनाग्निहोत्रं रूप्यते। तस्मान्नैयमिकस्यैतन्नामधेयमितरत्र तद्वदतिदेश इति ॥४॥



[प्रायणीयनाम्नो धर्मानतिदेशकत्वाधिकरणम् ॥२॥]

किमेष एवोत्सर्गः, सर्वं कर्मनामान्यत्र श्रूयमाणं धर्माणां ग्राहकमिति। एवं

---

(=दही से होम करता है), पयसा जुहोति (=दूध से होम करता है), अग्नये च प्रजापतये च सायं जुहोति (=अग्नि और प्रजापति देवता के लिये सायंकाल होम करता है), इस प्रत्यक्ष गुणसंयोग से कर्म का वाचक होवे, कर्म का नाम होवे। इस रूप वाला 'जुहोति' अग्निहोत्रसंज्ञक है। और इतर (=मासाग्निहोत्र प्रयुक्त) जुहोति का रूप नहीं है। रूप के अभाव में नहीं जाना जायेगा कि यह अग्निहोत्र कैसा (=किस रूप वाला) है। (आक्षेप) 'मास' उसका रूप हो जायेगा। (समाधान) मास कर्म का अङ्ग नहीं है। वह कर्त्ता का धर्म है। और भी—अग्निहोत्र का मास में विधान किया जाता है न कि मास से अग्निहोत्र रूप वाला बताया जाता है। इससे नैयमिक अग्निहोत्र का यह नामधेय है अन्य का तद्वदतिदेश है ॥४॥

**विवरण**—मासोऽस्य रूपम्—इसका तात्पर्य यह है कि कुण्डपायिनामयन मासमग्निहोत्रं जुहोति का अर्थ है—महिना भर होम होता है। इस प्रकार मास अग्निहोत्र का अङ्ग होने से यह अग्निहोत्र रूप वाला हो जायेगा। कर्तृधर्मः सः—'अग्निहोत्रं मासं यावत् करोति' अर्थ होने से यह कर्त्ता के साथ सम्बद्ध है, उसका धर्म है ॥४॥



**व्याख्या**—क्या यही उत्सर्ग है—सब कर्मनाम अन्यत्र श्रूयमाण धर्मों के ग्राहक होते

---

१. अनुपलब्धमूलम्। द्र०—दध्नेन्द्रियकामस्य। तै० ब्रा० २।१।५।६॥
२. अनुपलब्धमूलम्। द्र०—पयसाऽग्निहोत्रं जुहोति। काठक सं० ६।१॥
३. अग्नये च प्रजापतये च सायं जुहोति। द्र०—मै० सं० १।८।७॥
४. 'अर्थान्तरस्य जुहोतेः' इति पाठान्तरम्।

खलु प्राप्तम् । एवं प्राप्त इदमारभ्यते—

अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥५॥ (सि०)

गवामयने श्रूयते-**वैश्वानरो ज्योतिष्टोमः**[1] **प्रायणीयमहर्भवति**[2] इति । अस्ति तु द्वादशाहे प्रथममहः प्रायणीयं नाम—**प्रायणीयोऽतिरात्रः**[3] इति । तयोर्नानात्वं तेनैव न्यायेन सिद्धं **प्रकरणान्तरे प्रयोजनान्यत्वम्**[4] इति ।

तत्रायं प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्माणां ग्राहकः । किं तर्हि ? गुणार्थैषा श्रुतिः । कथम् ? लक्षणया नामधेयं धर्माणां ग्राहकमुक्तम् । असति च श्रुत्यर्थे लक्षणार्थो ग्राह्यः । इह तु श्रुत्यर्थ एव सम्भवति । गुणार्थ एष शब्दः । गुणेन —क्रियायोगेन, तस्मिन् कर्मणि श्रुत्यैव प्रयुज्यते—प्रयन्ति अनेनेति प्रायणीयं, प्रवर्तन्तेऽनेन सत्र इति । वाक्यशेषश्चास्यैतमेवार्थमाह-**ज्योतिरेव पुरस्ताद् दधाति**[5]

---

हैं । ऐसा निश्चय ही प्राप्त होता है । ऐसा प्राप्त होने पर यह आरम्भ करते हैं—

**अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥५॥**

सूत्रार्थः—(अपि वा) ऐसा नहीं है । (सत्रकर्मणि) सत्रसंज्ञक कर्म में (एषा) यह (श्रुतिः) श्रुति (गुणार्था) गुणार्थ (स्यात्) होवे ।

व्याख्या—गवामयन में सुना जाता है—वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति (=वैश्वानर देवताक ज्योतिष्टोम प्रायणीय नामवाला दिन होता है) । द्वादशाह में प्रायणीय नामवाला प्रथम दिन है—प्रायणीयोऽतिरात्रः । इन दोनों (=प्रायणीयों) का नानात्व उसी न्याय से सिद्ध है—प्रकरणान्तरे प्रयोजनान्यत्वम् (=प्रकरणान्तर में श्रूयमाण शब्द प्रयोजनवाला होता है) ।

वहां यह प्रायणीय शब्द अन्यत्र भी श्रूयमाण धर्मों का ग्राहक नहीं है । तो क्या है ? गुण के विधान के लिये यह श्रुति है । किस हेतु से ? लक्षणा से संज्ञा धर्मों की ग्राहिका होती है, यह कह चुके हैं । श्रुत्यर्थ के सम्भव न होने पर लाक्षणिक अर्थ ग्राह्य होता है । यहां तो श्रुत्यर्थ ही सम्भव है । गुण के लिये यह शब्द है । गुण से=क्रिया के योग से उस कार्य में [प्रायणीय शब्द] श्रुति से ही प्रयुक्त है । प्रगति करते हैं जिससे वह प्रायणीय अर्थात् सत्र में जिससे प्रवृत्त होते हैं । वाक्यशेष भी इसके इसी अर्थ को कहता है—ज्योतिरेव पुरस्ताद्

---

१. अनुपलब्धमूलम् । द्र०—अग्निष्टोमो वैश्वानरः । तै० सं० ५।५।१।३॥

२. अनुपलब्धमूलम् । द्र०—प्रायणीयमेतदहर्भवति । तां० ब्रा० ४।२।१॥

३. अनुपलब्धमूलम् । ऐ० ब्राह्मणे (४।१७) तु गवामयनप्रकरणे 'यथा वा प्रायणीयोऽतिरात्रः' इत्येवमतिदेश उपलभ्यते ।

४. मी० २।३।२४॥ ५. तै० सं० ७।४।६।२॥

इति। येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात् क्रियत इत्यर्थः—**ज्योतिरेव पुरस्ताद् दधाति** इति। तस्मान्नायमतिदेशः ॥५॥

———

**[ विश्वजिति षाडहिकषट्पृष्ठातिदेशाधिकरणम् ॥३॥ ]**

**विश्वजित् सर्वपृष्ठो भवति**[1] इति श्रूयते। तत्र विचार्यते—किमयमनुवादो

---

दधाति (=ज्योति को ही पहले करता है)। जिससे ज्योति प्रायणीय होता है इस कारण ज्योति को पहले किया जाता है। यह अर्थ है—ज्योतिरेव पुरस्ताद् दधाति का। इससे यह अतिदेश नहीं है ॥५॥

**विवरण—प्रायणीयमहर्भवति**—सायणाचार्य ने तां० ब्रा० ४।२।१ के भाष्य में लिखा है—'प्रायणीयसंज्ञक द्वितीय अहः अनुष्ठेय होता है। यद्यपि श्रुत्यन्तर में प्रथम विहित अतिरात्र की प्रायणीय संज्ञा प्रसिद्ध है, तथापि प्रथम और उत्तम (=अन्त्य) अतिरात्रों के सर्वत्र साधारण होने से इसी (द्वितीय अहः) का ही गवामयन में असाधारण प्राथम्य होने से इसी आदि वाला गवामयन का स्वरूप है।'[2] इससे द्वितीय दिन में ही प्रायणीय शब्द प्रयुक्त है।

**प्रथममहः प्रायणीयं नाम**—द्वादशाहसंज्ञक सत्र में अतिरात्र का प्रथम दिन मानकर सुत्या के आह्वान में अद्य सुत्या पढ़ने का उल्लेख किया है। **प्रयन्त्यनेनेति**—प्रायणीय का यह क्रियारूपी गुण से अर्थ गवामयन सत्र एवं द्वादशाह सत्र दोनों में समान रूप से उपपन्न होता है। द्वादशाह सत्र गत प्रायणीय का प्रायणीयत्व भाष्यकार ने स्वयं दर्शा दिया है—**प्रवर्तन्तेऽनेन सत्र इति**। गवामयनगत प्रायणीय का प्रायणीयत्व तां० ब्रा० ४।२।२ में इस प्रकार दर्शाया है—**प्रायणीयेन वा अह्ना देवाः स्वर्गं लोकं प्रायन्ति प्रायंस्तत् प्रायणीयस्य प्रायणीयत्वम्**। **ज्योतिरेव पुरस्ताद् दधाति**—यह वचन तै० सं० ४।६।२ में षट्त्रिंशद् रात्र सत्र के प्रकरण में है ॥५॥

———

**व्याख्या—विश्वजित् सर्वपृष्ठो भवति** (=विश्वजित् सर्व पृष्ठवाला होता है)

---

१. द्र०—विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति। तै० सं० ७।२।५।६॥

२. आगे ७।३।२६ सूत्र के भाष्य के अन्त में गवामयन के ३६१ दिनों का विवरण दिया है, उसमें प्रायणीय अतिरात्र प्रथम दिन है। उक्त विवरण हमने श्री पूज्य गुरुवर चिन्नस्वामीजी कृत यज्ञतत्त्वप्रकाश के आधार पर दिया है। वह सम्भवतः सायण के 'यद्यपि श्रुत्यन्तर में प्रथम विहित अतिरात्र की प्रायणीय संज्ञा प्रसिद्ध है' के अनुसार होता है।

विधिर्वेति। किं प्राप्तम्? अनुवाद इति। कुतः?

विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥६॥ (पू०)

यो ह्यसर्वपृष्ठतस्य सर्वपृष्ठता विधेया। यस्तु सर्वपृष्ठ एव, तस्य तया किं विहितया? अयं च सर्वपृष्ठ एव। कथम्? तत्पूर्वकत्वात्। ज्योतिष्टोमपूर्वकत्वात्। ज्यौतिष्टोमिकानि स्तोत्राण्यत्र प्राप्यन्ते। तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति। तानि सर्वाण्यस्य। तैरयं सर्वपृष्ठो भवति। ननु न तानि पृष्ठानि? उच्यते। अस्ति च पृष्ठशब्दः। तेष्वस्ति पृष्ठशब्दः। सप्तदशानि पृष्ठानि[1] इति। तस्मादनुवादः ॥६॥

षडहाद्वा तत्र हि चोदनाः ॥७॥

---

ऐसा सुना जाता है। उसमें विचार करते हैं—क्या यह अनुवाद है अथवा विधि है? क्या प्राप्त होता है? अनुवाद है। किस हेतु से?

विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥६॥

सूत्रार्थः—(विश्वजिति) विश्वजित् [अतिरात्र] याग में (सर्वपृष्ठे) सर्वपृष्ठ के प्राप्त होने से अनुवाद है। (तत्पूर्वकत्वात्) ज्योतिष्टोम प्रकृति होने से चोदकप्राप्त (ज्योतिष्टोमिकानि पृष्ठानि) ज्योतिष्टोमविषयक पृष्ठों का अनुवाद किया जाता है (च) और (पृष्ठशब्दः) पृष्ठ शब्द माहेन्द्रादि स्तोत्रों में भी (अस्ति) है।

व्याख्या—जो असर्वपृष्ठ है उसकी सर्वपृष्ठता विधेय होवे। जो सर्वपृष्ठ ही है उसके विधान करने से क्या प्रयोजन? यह तो सर्वपृष्ठ है ही। किस प्रकार? तत्पूर्वक होने से=ज्योतिष्टोमपूर्वक होने से। ज्योतिष्टोम सम्बन्धी स्तोत्र यहां प्राप्त होते हैं, उनमें माहेन्द्र स्तोत्र आदि चार स्तोत्र हैं। वे सब इस विश्वजित् के हैं। उनसे यह सर्वपृष्ठ होता है। (आक्षेप) वे (=माहेन्द्रादि स्तोत्र) पृष्ठ नहीं हैं। (समाधान) पृष्ठ शब्द है=उनमें पृष्ठ शब्द है—सप्तदशानि पृष्ठानि (=सत्रह पृष्ठसंज्ञक स्तोत्र होते हैं)। इससे अनुवाद है ॥६॥

षडहाद् वा तत्र हि चोदनाः ॥७॥

सूत्रार्थः—(वा) वा शब्द अनुवाद पक्ष की निवृत्ति के लिये है। (षडहाद्) षडहसंज्ञक याग से अतिदेश विधि है (तत्र) षडह में (हि) निश्चय से पृष्ठों की (चोदनाः) चोदनाएं हैं।

---

१. तां ब्रा० २०।१।१॥ २१।६।१॥

नायमनुवादः। किं तर्हि? विधिः। अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात्। अपि च, ज्योतिष्टोमे न पृष्ठबहुत्वमस्ति, यस्यायमनुवादः स्यात्। षडहे तु तदस्ति। तत्र हि चोदनाः पृष्ठानां, **रथन्तरं पृष्ठं भवति**[1] इत्येवमाद्याः। तस्मात् षाडहिकानामातिदेशिको विधिरिति ॥७॥

**लिङ्गाच्च ॥८॥**

लिङ्गं चैतमर्थं दर्शयति—**पवमाने रथन्तरं करोति, आर्भवे बृहत्। मध्ये इतराणि। वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्य**[2] इति विनिवेशपरे वाक्ये षाडहिकानि पृष्ठानि दर्शयति ॥८॥

अथ यदुक्तम्, अस्ति च पृष्ठशब्द इति। तत्र ब्रूमः—

**उत्पन्नाधिकारो ज्योतिष्टोमः ॥९॥**

---

**व्याख्या**—यह अनुवाद नहीं है। तो क्या है? विधि है। अनुवाद विशेष प्रवृत्ति का करानेवाला न होने से अनर्थक होवे। और भी—ज्योतिष्टोम में पृष्ठों का बहुत्व नहीं है, जिसका यह अनुवाद होवे। षडह याग में वह (=पृष्ठों का बहुत्व) है। वहां पर विधियां हैं पृष्ठों की – रथन्तरं पृष्ठं भवति (=रथन्तर पृष्ठ होता है) इत्यादि। इसलिये षडह में विद्यमान पृष्ठों की यह आतिदेशिक विधि है ॥७॥

**विवरण**—तत्र हि चोदनाः—हमें षडह में रथन्तरं पृष्ठं भवति चोदनाएं उपलब्ध नहीं हुई। सुबोधिनी वृत्तिकार ने 'रथन्तर बृहत् वैरूप वैराज रैवत शाक्वर' इन छः पृष्ठों की षडह में चोदनाएं हैं, ऐसा लिखा है ॥७॥

**लिङ्गाच्च ॥८॥**

**सूत्रार्थः**—(लिङ्गात्) लिङ्ग से (च) भी षडह के पृष्ठों की अतिदेश विधि है।

**व्याख्या**—इस अर्थ को लिङ्ग भी दर्शाता है—पवमाने रथन्तरं करोति, आर्भवे बृहत्, मध्ये इतराणि, वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्य (=पवमान में रथन्तर करता है, आर्भव में बृहत्, मध्य में अन्य, होता का वैरूप साम, मैत्रावरुण का वैराज साम, ब्राह्मणाच्छंसी का रैवत साम और अच्छावाक का शाक्वर साम)। इस विनिवेशपरक वाक्य में षडह सम्बन्धी पृष्ठों को दर्शाता है ॥८॥

**व्याख्या**—और जो यह कहा कि पृष्ठ शब्द है, उसमें कहते हैं—

**उत्पन्नाधिकारो ज्योतिष्टोमः ॥९॥**

---

१. अनुपलब्धमूलम्। २. अनुपलब्धमूलम्।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य
चतुर्थः पादः



सम्पूर्णः सप्तमोऽध्यायः ॥

---

पूर्वमीमांसा-उद्धरणकोश में निर्दिष्ट आकरस्थान प्रायः चिन्त्य हैं। उनका मूल ग्रन्थ से मिलाये विना उपयोग करना स्वयं को तथा पाठकों को भ्रम में डालने वाला है। इससे इस ग्रन्थ का उपयोग वहुत सावधानता से करना चाहिये। हमारी दृष्टि में तो यह ग्रन्थ जिस रूप में और जिस प्रतिष्ठित संस्था से प्रकाशित हुआ है वह उसके अनुरूप नहीं है ॥२०॥

इति अजयमेरु (अजमेर) मण्डलान्तर्गत-विरञ्च्यावासा (विरकच्यावासा)-
भिजनेन सारस्वत-कुलावतंसस्य तत्रभवतः श्री सूर्यरामस्य प्रपौत्रेण
श्री रघुनाथस्य पौत्रेण श्रीयमुनादेवी-गौरीलालाचार्ययोः पुत्रेण
पूर्वोत्तरमीमांसापारदृश्वनां महामहोपाध्यायाद्यनेकविरुदभाजाम्
श्रीचिन्नस्वामिशास्त्र्यपरनाम्नां वेङ्कटसुब्रह्मण्य-शास्त्रिणाम्
अन्तेवासिना भारद्वाजगोत्रेण त्रिप्रवरेण
वाजसनेयचरणेन माध्यन्दिनिना
**युधिष्ठिर-मीमांसकेन**
विरचितायां
**मीमांसा-शाबरभाष्यस्य वैदिकतत्त्व-प्रकाशिन्यां 'यशोदा'ख्यायां हिन्दी-व्याख्यायां**
**सप्तमोऽध्यायः पूर्तिमगात् ॥**

२०४७ वैक्रमाब्दे आषाढकृष्णायां नवम्यां
रविवासरे (=जूनमासे सप्तदशतारिकायाम्) १९९० खैस्ताब्दे
सप्तमाध्यायस्य शाबरभाष्य-व्याख्या पूर्तिमगात् ॥



# मीमांसा-शाबर-भाष्यम्

(हिन्दी-व्याख्या-सहितम्)

## अष्टमाध्याये प्रथमः पादः

[ विशेषातिदेशप्रतिज्ञाधिकरणम् ॥१॥ ]

एवं तावत् सप्तमेनाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम्—'अविहितधर्मकेष्वैन्द्राग्नादिषु कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्ते' इति। तत्र चिन्ता भवति—किमेकस्मिन् कर्मणि सर्वकर्मभ्यो[1] धर्मातिदेश उतैकस्मादिति। अविशेषात् सर्वेभ्य इति प्राप्तम्। एकेन तु निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ किंचित् कारणं नास्ति। सत्यम्। तदेव तु न ज्ञायते। कस्मिन् कस्येति? तदर्थं विशेषलक्षणं वक्तव्यमस्मिन्नस्येति। तदिदमध्यायादौ प्रतिज्ञायते—

अथ विशेषलक्षणम् ॥१॥ (प्रतिज्ञा)

---

**व्याख्या**—इस प्रकार सप्तमाध्याय से सामान्य रूप से अतिदेश लक्षण कहा है—'जिनका धर्म विहित नहीं है ऐसे ऐन्द्राग्नादि कर्मों में विहितधर्मवाले दर्शपूर्णमासादि से धर्म अतिदिष्ट होते हैं।' इससे विचार होता है—क्या एक कर्म में सब [विहितधर्मवाले] कर्मों से धर्म का अतिदेश होता है अथवा एक कर्म से। अविशेष (=विशेष न कहने) से सबसे [धर्म अतिदिष्ट होते हैं] ऐसा प्राप्त होता है। एक [विहितधर्मवाले कर्म] से [अविहितधर्मवाले] कर्म के निराकाङ्क्ष कर देने पर द्वितीय कर्म के धर्म की प्राप्ति में कुछ प्रयोजन नहीं है। यह सत्य है। परन्तु यही तो ज्ञात नहीं होता है कि किस कर्म में किसके धर्म का अतिदेश होवे? इसलिये विशेष लक्षण कहना चाहिये—इस कर्म में इस कर्म का धर्म अतिदिष्ट होवे। यह अध्याय के आरम्भ में प्रतिज्ञात किया जाता है—

**अथ विशेषलक्षणम् ॥१॥**

**सूत्रार्थः**—(अथ) सामान्य अतिदेश के सप्तम अध्याय से निरूपण करने के अनन्तर (विशेषलक्षणम्) विशेष अतिदेश के लक्षण का निरूपण करते हैं।

---

१. 'सर्वकर्मसु'—पाठान्तरम्।

अथ विशेषलक्षणमिति । अथेदानीं वृत्तात् सामान्यातिदेशलक्षणादनन्तरं विशेषलक्षणं वक्ष्यामः । तदुच्यमानं यथाकालं बोद्धव्यमिति ॥१॥

———

[सादृश्यविशेषेण नियतप्रकृतितो धर्मातिदेशाधिकरणम् ॥२॥]

तदेतत् संक्षेपेणैवोच्यते—

यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥२॥ (उ०)

यस्य वैदिकस्य विध्यन्तरस्य लिङ्गं किंचित्, शब्दगतमर्थगतं वा वैकृत्यां कर्मचोदनायां, तद्गुणवाक्ये वा दृश्यते, तत्र स विध्यन्तः स्यात्। कुतः ? अर्थसंयोगात्। तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषणेन संयोगोऽनुभूतपूर्वः। संयोगिनोश्चान्यतरो दृश्यमान इतरमदृश्यमानमप्यनुमानाद् बुद्धौ संनिधापयति। अभिधानवत्। यथा-अग्निहोत्रमित्यभिधानं कौण्डपायिनामयने श्रूयमाणं नैयमिका-

---

व्याख्या—अब कहे गये सामान्यातिदेश के लक्षण के अनन्तर विशेष अतिदेश का लक्षण कहते हैं। पूर्व निरूपित सामान्यातिदेश के लक्षण के अनन्तर विशेष अतिदेश का लक्षण कहेंगे। उसे यथाकाल कहे गये को जानना चाहिये ॥१॥

———

व्याख्या—वह (=विशेषातिदेश लक्षण) संक्षेप से ही कहा जाता है—

यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥२॥

सूत्रार्थः—(यस्य) जिस आग्नेयादि विध्यन्त का (लिङ्गम्) कोई शब्दगत अथवा अर्थगत लिङ्ग विकृति कर्म की चोदना अथवा उसके गुण वाक्यों में दिखाई देता है, वह वहां =सौर्यादि विध्यन्त होवे (अर्थसंयोगात्) उस अर्थलिङ्ग के उस विध्यन्त के साथ संयोग होने से, (अभिधानवत्) अग्निहोत्र आदि नाम के समान।

व्याख्या—जिस वैदिक विध्यन्त का शब्दगत अथवा अर्थगत कोई लिङ्ग विकृति यागों की चोदना में अथवा उसके गुण वाक्य में देखा जाता है, वहां वह विध्यन्त होवे। किस हेतु से ? अर्थ के संयोग से। उस अर्थ=लिङ्ग का उस विध्यन्त विशेष के साथ पूर्व अनुभव किया गया संयोग है। दो संयोगियों में एक दृश्यमान (=दिखाई देता हुआ) इतर (=दूसरे) अदृश्यमान का भी अनुमान से बुद्धि में उपस्थित कराता है अभिधान के समान। जैसे अग्निहोत्र यह नाम कौण्डपायियों के अयन में श्रूयमाण नियम से किये जानेवाले (=नित्य)

ग्निहोत्रधर्मान् बुद्धौ संनिधापयति। किमतोऽत्र ? एतदतो भवति, अपूर्णं यद्वाक्यं तत्पूरणसमर्थेनावयवेन बुद्धौ संनिहितेनैकवाक्यतां याति। यथा **दर्शपूर्णमासाभ्यां यजेत**[1] इति विध्यादिः, कथमिति विध्यन्तापेक्षः, अग्न्यन्वाधानादिविधानकाण्डेन पाठाद् बुद्धौ संनिहितेनैकवाक्यतां याति। दर्शपूर्णमासाभ्यां यजेतेत्थमिति। एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः, सोऽपि वैदिकेन विध्यन्तेनानुमानाद् बुद्धौ संनिहितेनैकवाक्यतां यास्यति। यथा—**सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः**[2] इति। तत्र कथमिति विध्यन्तापेक्षायामनेकविध्यन्तसंनिपातेऽसाधारणेन निर्वपतिशब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते। तत्राप्याग्नेयाद्यनेकापूर्वविध्यन्तप्रसङ्गे, एकदेवतात्वेन वौषधिना वाऽसाधारणेन लिङ्गेनाऽऽग्नेयविध्यन्तो नियम्यते। तदेतदेवं विज्ञायते, सौर्यं चरुं निर्वपेदाग्नेयवत्। **आग्नावैष्णवमेकादशकपालं निर्वपेद्**[3] अग्नीषोमीयवत्। सर्वत्रैवम्।

---

अग्निहोत्र के धर्मों को बुद्धि में उपस्थित कराता है। (आक्षेप) इससे यहां पर क्या [सिद्ध होता है] ? (समाधान) इससे यह होता है कि अपूर्ण जो वाक्य है वह पूरण समर्थ अवयव वाले बुद्धि में सन्निहित के साथ एकवाक्यता को प्राप्त होता है। जैसे दर्शपूर्णमासाभ्यां यजेत यह विध्यादि वाक्य, 'कैसे इस' इस आकाङ्क्षा से विध्यन्त की अपेक्षा रखता हुआ अग्न्यन्वाधान आदि विधान समुदाय के साथ पाठ से बुद्धि में समीपस्थ के साथ एकवाक्यता को प्राप्त होता है—दर्शपूर्णमासों से इस प्रकार यजन करे। इसी प्रकार विध्यन्त की अपेक्षा वाला जो विकृतियागस्थ विध्यादि है, वह भी बुद्धि में सन्निहित वैदिक विध्यन्त के साथ अनुमान से एकवाक्यता को प्राप्त होवेगा। जैसे सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः (= ब्रह्मवर्चस की कामनावाला सौर्य चरु का निर्वाप करे) यह। वहां कैसे इस आकाङ्क्षा से विध्यन्त की अपेक्षा होने पर अनेक विध्यन्तों के सन्निपात में (=एक साथ उपस्थित होने पर) असाधारण (=विशेष) 'निर्वाप'शब्द से दर्शपूर्णमास के विध्यन्त संयोगी लिङ्ग से उस (= दर्शपूर्णमास) का विध्यन्त प्राप्त होता है। वहां भी आग्नेयादि अनेक [याग होने से अनेक] अपूर्व विध्यन्तों की प्राप्ति में एकदेवतात्व से अथवा औषधि के असाधारण लिङ्ग से आग्नेय विध्यन्त नियमित होता है। इससे इस प्रकार जाना जाता है—सूर्य देवतावाले चरु द्रव्यवाले याग को आग्नेय याग के समान करे। आग्नावैष्णव एकादशकपाल का निर्वाप करे अग्नीषोमीय के समान करे। इसी प्रकार सर्वत्र जानना चाहिये।

---

१. अनुपलब्धमूलम्। द्र०—यो दर्शपूर्णमासाभ्यां यजते। ऐ० ब्रा० १।१॥ शत० ब्रा० २।४।२।११॥

२. अनुपलब्धमूलम्। द्र०—सौर्यं चरुं निरवपन् ... ब्रह्मवर्चसकामः। तै० सं० २।३। २।२-३॥

३. तै० सं० २ २।९, अस्मिन् अनुवाके बहुधावचनं श्रूयते किञ्चिद् भेदेन।

प्रतिपदाख्याने तु गौरवं परिहरद्भिर्वृत्तिकारैः सर्वसामान्यः शब्दः परिगृहीतः प्रकृतिवदिति। एवं यत्र सूक्ष्ममपि किंचित् सामान्यं, शब्दो वाऽर्थो वा, हविर्देवतादि तद्गुणा वा रूपादय उपलभ्येरन्, तत्र तदीयो विध्यन्तः कल्प्यः। तदेतत् संक्षेपेणात्रैव सर्वमुक्तम्। शिष्यहितार्थमुत्तरः प्रपञ्चः। श्लोकमप्युदाहरन्ति—

**वितीर्य हि महज्जालमृषिः[1] संक्षिप्य चाब्रवीत्।**
**इष्टं हि विदुषां लोके समासव्यासधारणम्[2]॥ इति ॥२॥**

---

**विवरण—स विध्यन्तः स्यात्**—विध्यन्त=विधि के अवयव अर्थात् अङ्ग। **तस्यार्थस्य लिङ्गस्य ...अनुमानाद् बुद्धौ सन्निधापयति**—इस भाग का कुमारिल ने 'अनुमान से बुद्धि में उपस्थिति कराता है' तात्पर्य का खण्डन करके 'उपमान से बुद्धि में उपस्थित कराता है' अभिप्राय की स्थापना की है। यह सब विस्तार से टुप्टीका में देखें। **आग्नेयाद्यनेकापूर्वविध्यन्ते प्रसक्ते**—पूर्णमास में आग्नेय अष्टाकपाल, अग्नीषोमीय एकादशकपाल, अग्नीषोमीय उपांशुयाग आज्य से, तीन यागों की विध्यन्तता है। दर्श में आग्नेय अष्टाकपाल, ऐन्द्रदधि, ऐन्द्रपयः, तीन यागों का विध्यन्त है। उनकी प्राप्ति होने पर। **एकदेवताप्रसङ्गेन**—विकृति याग सौर्य में सूर्य एक देवता होने से पूर्णमासस्थ एकदेवतावाले आग्नेय याग की विध्यन्तता को, **अथवा ओषधिना** विकृति यागस्थ चरु व्रीहि ओषधिवाला होने से अष्टाकपाल पुरोडाश के भी ओषधि द्रव्यवान् होने से सौर्य विकृतियाग पूर्णमासस्थ आग्नेय याग की विध्यन्तता को प्राप्त होता है। **आग्नावैष्णवमेकादशकपालं निर्वपेद्** यह विकृति याग दो देवतावाला होने से पूर्णमासस्थ अग्नीषोमीय दो देवता वाले एकादेश कपाल याग की विध्यन्तता को प्राप्त होता है। ऊपर जो सौर्य याग और आग्नावैष्णव याग में देवता वा हव्य द्रव्य में से एक की समानता से आग्नेय वा अग्नीषोमीय याग की विध्यन्तता प्राप्त हो सकती है। पुनः **एकदेवतात्वेन वौषधिना वा** दो का निर्देश क्यों किया। इसका उत्तर है देवतागत एकत्वादि के भेद होने पर जहां आज्य द्रव्य होगा वहां अग्नीषोमीय उपांशुयाग की विध्यन्तता होगी।

**व्याख्या—प्रतिपद कथन (=प्रत्येक विकृति याग के विषय) में गौरव का परिहार करते हुए वृत्तिकारों ने सर्वसामान्य शब्द 'प्रकृतिवत्' को ग्रहण किया है। इस प्रकार जहां सूक्ष्म भी किञ्चित् सामान्य शब्द वा अर्थ तथा हवि और देवतादि उसके गुणभूत रूपादि उपलब्ध होवें, वहां उसके विध्यन्त की कल्पना करनी चाहिये। यह संक्षेप से ही यहां सब कहा है। शिष्यों के हित के लिये उत्तर प्रपञ्च है। [इस विषय में] श्लोक भी उदाहृत करते हैं—**

**महान् जाला=बन्धन कारण का विस्तार करके ऋषि ने संक्षेप से भी कहा है। लोक में विद्वानों को समास (=संक्षेप) और व्यास (=विस्तार) से धारण करना इष्ट है ॥२॥**

---

१. 'महज्जालमृषिः' इत्यपपाठः। न चास्य पाठस्यास्ति काचित् सङ्गतिः।
२. 'महज्ज्ञानमृषिः' इति शुद्धपाठेन युक्तः महाभारते आदिपर्वणि (१।५१) पठ्यते।

## [सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥३॥]

ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रूयते। तत्र विध्यन्तं प्रति चिन्ता। कुतोऽस्मिन् विध्यन्तः स्यादिति। तदुच्यते—

---

विवरण—वृत्तिकारैः—भाष्यकार शबर स्वामी ने जहां भी वृत्तिकार को उद्धृत किया है वहां एकवचनान्त शब्द का ही प्रयोग किया है। यहां वृत्तिकारैः बहुवचनान्त का प्रयोग होने से सब वृत्तिकारों=व्याख्याकारों का ग्रहण इष्ट है। शाबरभाष्य के व्याख्याता क्षीर-समुद्रवासिमिश्र ने 'व्याख्यातृभिः' रूप में निर्देश किया है। शिष्यहितार्थमुत्तरः प्रपञ्चः—जो 'इसके साथ इस कर्म की चोदनाविषयक लिङ्ग सामान्य है' इसकी विवेचना नहीं कर सकता उसके प्रति प्रतिनियत कर्म से चोदनालिङ्गसामान्य का ज्ञान कराने के लिये उत्तर प्रपञ्च है। प्राय: प्रत्येक आर्ष ग्रन्थ के प्रवक्ता महर्षि वृन्द शिष्यों के हित के लिये अपने प्रवचन में संक्षेप और प्रपञ्च का आश्रयण करते हैं। पाणिनि मुनि द्वारा अष्टाध्यायी में संक्षेप और प्रपञ्च से किये गये प्रवचन के विषय में महाभाष्यकार पतञ्जलि ने लिखा है—ते खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च। केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति। (महाभाष्य २।१।५, ६।३।१४)।

अर्थात् वे ही विधियां अध्येताओं के द्वारा अच्छे प्रकार परिगृहीत होती हैं, जिनके लक्षण=संक्षिप्त वचन और प्रपञ्च=विस्तार होता है। जिन विधियों का केवल लक्षण अथवा प्रपञ्च ही होता है वे उस प्रकार उपकारक नहीं होती हैं।

उदाहरन्ति—वृत्तिकारा इति शेषः। अर्थात् वृत्तिकार अगले श्लोक को उदाहृत करते हैं। विस्तीर्य हि महज्जालम्—इसका तात्पर्य है ममत्व रूप महज्जाल बन्धन है उसको। द्र०—महदर्थजालं ममत्वबन्धनमिव क्षीरसमुद्रवासी मिश्र की व्याख्या। वस्तुतः महज्जालम् अपपाठ है। इस पाठ की सङ्गति भी नहीं लगती। शुद्धपाठ महज्ज्ञानम् होना चाहिये। यह श्लोक महाभारत आदिपर्व अ० १ के ५१ संख्या पर है। इसका अर्थ है—इतिहासरूपी महद्ज्ञान का विस्तार करके ऋषि (=कृष्णद्वैपायन व्यास) ने संक्षिप्त करके भी कहा है। महाभारत की उभयविध रचना उपलब्ध होती है। आरम्भ में संक्षिप्त रूप से समस्त ऐतिह्य का कथन है। उत्तरत्र १८ पर्वों में अति विस्तार से ॥२॥

---

व्याख्या—ज्योतिष्टोमेन स्वर्गकामो यजेत (=स्वर्ग की कामनावाला ज्योतिष्टोम से यजन करे) ऐसा सुना जाता है। उसमें विध्यन्त के प्रति चिन्ता है। इसमें विध्यन्त कहां (=किस याग) से होवे। वह कहते हैं—

## प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥३॥ (पू०)

प्रवृत्तत्वादिष्टेः[1] सोमे प्रवृत्तिः स्यात्। दार्शपौर्णमासिको विध्यन्तः सोमे स्यात्। कुतः? प्रवृत्तत्वात्[1]। दीक्षणीयादिष्विष्टिषु दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः दीक्षणीयायाम्, आतिथ्यायां,प्रायणीयायां,पशौ च। तदनन्तरं सोमः। तत्रापि स एव प्रवृत्त्या विज्ञायते। यथा, देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः, माठरः कौण्डिन्यो भारद्वाज इत्युत्तरेष्वपि भोजयितव्य इति प्रवृत्त्याऽनुबध्यते। तस्माद् ऐष्टिकः सोमे विध्यन्तः ॥३॥

## लिङ्गदर्शनाच्च ॥४॥ (पू०)

तस्यैकशतं प्रयाजानुयाजाः[2], इति च ऐष्टिका धर्माः सोमे दृश्यन्ते। तस्माच्च अस्मिन् ऐष्टिको विध्यन्तः ॥४॥

---

### प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥३॥

सूत्रार्थः—(सोमे) सोमयाग में (इष्टेः) इष्टि के धर्मों की प्रवृत्ति होवे (प्रवृत्तत्वात्) सोमाङ्गभूत दीक्षणीयादि में ऐष्टिक धर्मों के प्रवृत्त होने से।

विशेष—कुतूहलवृत्ति में सोमेऽपि पाठान्तर है।

व्याख्या—सोमयाग में [सोमाङ्गभूत दीक्षणीयादि इष्टियों की] प्रवृत्ति होने से इष्टि के धर्मों की प्रवृत्ति होवे। सोम में दार्शपौर्णमासिक विध्यन्त होवे। किस हेतु से? प्रवृत्त होने से। दीक्षणीयादि इष्टियों में दार्शपौर्णमासिक विध्यन्त प्रवृत्त है—दीक्षणीया, आतिथ्या, प्रायणीया और पशु में। तदनन्तर सोम [होता है]। वहां भी वह (=दार्शपौर्णमासिक विध्यन्त) ही प्रवृत्ति से जाना जाता है। जैसे देवदत्त भोजयितव्य है, विष्णुमित्र भोजयितव्य है, माठर कौण्डिन्य भारद्वाज [ऐसा कहने पर] उत्तरों में भी भोजयितव्य यह प्रवृत्ति से अनुबन्धित होता है। इसलिये सोम में ऐष्टिक विध्यन्त होवे ॥३॥

### लिङ्गदर्शनाच्च ॥४॥

सूत्रार्थः—प्रयाजादि (लिङ्गदर्शनात्) लिङ्ग दर्शन से (च) भी सोम में ऐष्टिक धर्म होवें। [लिङ्गदर्शन भाष्य में देखें।]

व्याख्या—तस्यैकशतं प्रयाजानुयाजाः (=उस सोम के एक सौ एक प्रयाज और अनुयाज होते हैं) ये (=प्रयाज अनुयाज) ऐष्टिक धर्म सोम में देखे जाते हैं। उससे भी इस (=सोम) में ऐष्टिक विध्यन्त प्राप्त होता है ॥४॥

---

१. 'प्रवृत्तित्वात्'—पाठान्तरम्।

२. अनुपलब्धमूलम्। द्र०—त एकशतं प्रयाजानुयाजा भवन्ति। शाङ्खा०ब्रा० १८।१०॥

कृत्स्नविधानाद् वाऽपूर्वत्वम् ॥५॥ (उ०)

अपूर्वत्वमेव हि सोमे । स न कुतश्चिद् धर्मान् गृह्णाति । कुतः ? कृत्स्न-विधानात् । इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्[1] उक्तम् । विहितेतिकर्तव्यताकश्चायम् । तस्मादपूर्वः ॥५॥

स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥६॥

---

**विवरण**—शाङ्खायन ब्राह्मण १८।१० में एकशत (१०१) प्रयाज और अनुयाज की जो उपपत्ति दर्शाई है, वह हमारी समझ में पूरी तरह न आने से हम गणना का विवरण देने में असमर्थ हैं । **एकशतं प्रयाजानुयाजाः**—एकशतम् एकोत्तरशतम् अर्थात् १०१ । महाभाष्य के **एकशतमध्वर्युशाखाः** (पस्पशाह्निक) का कई लोग '१०० यजुर्वेद की शाखा' अर्थ करते हैं वह अशुद्ध है । संस्कृत भाषा के वाग्व्यवहारानुसार 'एकशतम्' का अर्थ १०१ ही होता है । चरण-व्यूह में भी शुक्लयजुर्वेद की १५ शाखाएं और कृष्णयजुर्वेद की ८६ शाखाएं (१५+८६=१०१) कही हैं । प्रकृत शाङ्खायन ब्राह्मण (१८।१०) में भी १०१ की उपपत्ति में कहा है—**शतायुर्वै पुरुषः शतपर्वा शतवीर्यः शतेन्द्रियः, उप य एकशततम स आत्मा** । पुरुष शरीर को शतायु शतपर्व शतवीर्य शतेन्द्रिय कहकर एकशततम एक सौ एकवां आत्मा को गिनाया है ॥४॥

कृत्स्नविधानाद् वाऽपूर्वत्वम् ॥५॥

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्व उक्त पक्ष के निराकरण के लिये है सोम में ऐष्टिक धर्म प्रवृत्त नहीं होते । (कृत्स्नविधानात्) सोम के प्रकरण में सकल अङ्गकलाप का विधान होने से उसका अपूर्वत्व है ।

**व्याख्या**—सोम में अपूर्वत्व ही है । वह कहीं से भी धर्मों को ग्रहण नहीं करता । किस हेतु से ? कृत्स्न का विधान होने से । इतिकर्तव्याविधेर्यजतेः पूर्वत्वम् (=जिस यजति की इतिकर्तव्यता की विधि नहीं कही है वह पूर्ववान् होता है अर्थात् वहां अतिदेश से धर्मों की प्राप्ति होती है) ऐसा कह चुके [मी० ७।४।१] । यह सोम विहित कर्तव्यतावाला है अर्थात् इसकी कृत्स्न इतिकर्तव्यता [प्रकरण में] विहित है । इससे यह अपूर्व है ॥५॥

स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥६॥

**सूत्रार्थः**—(स्रुगभिघारणाभावस्य) स्रुक् के अभिघारण के अभाव का निर्देश (नित्या-नुवादात्) नित्यानुवाद होने से (च) भी सोमयाग में ऐष्टिक धर्मों की प्रवृत्ति नहीं है ।

**विशेष**—न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि में अन्तरिक्ष और द्युलोक में

---

१. मी० अ० ७ पा० ४ अ० १ सू० १ ॥

स्रुगभिघारणस्य चाभावानुवादः सोमे भवति—घृतं वै देवा वज्रं कृत्वा सोममघ्नन्, स्रुचौ बाहू । तस्मात् स्रुचि सोमहविर्नाऽऽसाद्यते । न सोममाज्येनाभिघारयति' इति । तदुपपद्यते, यद्यपूर्वः सोमः । अथ दर्शपूर्णमासप्रकृतिः स्यात् आज्येनाभिघार्य स्रुग्भ्यां हूयते । तत्रैतद् दर्शनं नोपपद्यते । तस्मादपूर्वः ॥६॥

## विधिरिति चेत् ॥७॥ (पू०)

इति चेत् पश्यसि, स्रुगभिघारणाभावानुवाददर्शनादपूर्वः सोम इति । अथ

---

अग्निचयन प्राप्त ही नहीं अतः यह प्रतिषेध नित्यानुवाद है । असति प्रसङ्गे प्रतिषेधो नित्यानुवादः । द्र०—मी० भाष्य १।२।१८॥

व्याख्या—स्रुगभिघारण के अभाव का अनुवाद भी सोम में होता है । घृतं वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू । तस्मात् स्रुचि सोमहविर्नाऽऽसाद्यते । न सोममाज्येनाभिघारयति (=देवों ने घृत को वज्र बनाकर सोम को नष्ट किया दोनों स्रुच् दो बाहू हैं । इससे स्रुच् में सोम हवि का आसादन नहीं होता और न सोम हवि का घृत से अभिघारण करते हैं) । वह उपपन्न होता है यदि सोम अपूर्व है । यदि सोम दर्शपूर्णमास प्रकृति वाला होवे तो [सोम का] आज्य से अभिघारण करके दो स्रुचों से [उसका] होम होवे । उस अवस्था में यह उपपन्न नहीं होता । इससे सोम अपूर्व है ॥६॥

विवरण—स्रुगभिघारणस्य—दर्शपूर्णमासादि में पुरोडाश के जुहू नाम्नी स्रुक् में स्थापन से पूर्व स्रुवा से उपस्तरण किया जाता है । तत्पश्चात् पुरोडाश के अंगुष्ठपर्वमात्र दो भाग जुहू में रखकर स्रुक् का स्रुवा से अभिघारण किया जाता है । अभावानुवादः—सूत्र में नित्यानुवाद शब्द है । नित्यानुवाद का लक्षण मी० १।२।१८ के भाष्य में इस प्रकार दर्शाया है—असति प्रसङ्गे प्रतिषेधो नित्यानुवादः । स्रुचौ बाहू—आहुति देते समय जुहू स्रुक् के नीचे उपभृत् संज्ञक स्रुक् धारण की जाती है । इनको ही बाहू कहा है । स्रुचि सोमहविर्नाऽऽसाद्यते—जैसे जुहू स्रुक् में आहुति के लिये पुरोडाशादि हवि रखी जाती है तद्वत् सोम का जुहू में आसादन नहीं होता और न सोम हवि का स्रुवा से अभिघारण होता है ॥६॥

## विधिरिति चेत् ॥७॥

सूत्रार्थः—दर्शपूर्णमास से स्रुगभिघारण की प्राप्ति होने पर (विधिः) प्रतिषेध विधि (इति चेत्) मानी जाये तो ।

व्याख्या—यदि यह समझते हो कि स्रुक् के अभिघारण के अभाव के अनुवाददर्शन से

---

१. अनुपलब्धमूलम् । मै० संहितायां (३।८।२) तु 'घृत वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू' एतावानेव पाठ उपलभ्यते ।

कस्माद् दर्शपूर्णमासप्रकृतित्वेन प्राप्तस्य स्रुगभिघारणस्य प्रतिषेधकोऽयं विधिर्न भवति ? ॥७॥

इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति—

**न वाक्यशेषत्वात् ॥८॥ (उ०)**

नायं विधिः। कस्मात् ? वाक्यशेषत्वात्। अन्योऽत्र विधिराम्नातः। यदाह-**अंशुरंशुस्ते देव सोमाऽऽप्यायताम्'** इति। तस्य वाक्यशेषोऽयम्। कथं ज्ञायते? तेनाऽऽकाङ्क्षितत्वात्। **अवधिषुर्वा एतत् सोमं यदभिषुण्वन्ति। यदस्य स्रुचौ बाहू कुर्वन्ति। यच्चाऽऽज्यमन्तिकमकार्षुः। यदाह—अंशुरंशुस्ते देव सोमाऽऽप्यायताम्** इति। **यदेवास्याघ्नन्तः क्रूरमकुर्वंस्तदाप्याययन्ति**[2] इति। यद्ययमपि विधिः स्याद्

---

सोम अपूर्व है तो किस हेतु से दर्शपूर्णमास के प्रकृतित्व के कारण प्राप्त स्रुगभिघारण की प्रतिषेधक यह विधि नहीं होती है ? ॥७॥

व्याख्या—ऐसी प्रतिज्ञा के स्थित होने पर सूत्र से उत्तर देते हैं—

**न वाक्यशेषत्वात् ॥८॥**

सूत्रार्थः—(न) प्रतिषेध विधि नहीं है। (वाक्यशेषत्वात्) वाक्यशेष होने से। अर्थात् स्रुगभिघारण के अभावरूप अनुवाद अंशुरंशुस्ते देव सोम आप्यायताम् विधि का वाक्यशेष है। इस कारण यह प्रतिषेध विधि नहीं हो सकती।

व्याख्या—यह [प्रतिषेध] विधि नहीं है। किस हेतु से ? वाक्यशेष होने से। यहां अन्य विधि पढ़ी है—अंशुरंशुस्ते देव सोमाऽऽप्यायताम् (=हे देव सोम तुम्हारा अवयव अवयव आप्यायित होवे=बढ़े)। इस विधि का वाक्यशेष है। कैसे जाना जाता है ? उससे आकाङ्क्षित होने से अर्थात् उसकी आकाङ्क्षा रखने से। अवधिषुर्वा एतत् सोमं यदभिषुण्वन्ति। यदस्य स्रुचौ बाहू कुर्वन्ति। यच्चाऽऽज्यमन्तिकमकार्षुः। यदाह—अंशुरंशुस्ते देव सोमाऽऽप्यायताम् इति। यदेवास्याघ्नन्तः क्रूरमकुर्वंस्तदाप्याययन्ति (=मारते हैं जो यह सोम का अभिषव करते हैं। जो इसके दोनों स्रुचों को बाहू बनाते हैं और जो आज्य को समीप में रखते हैं। जो यह कहा है—हे देव सोम तुम्हारा अवयव अवयव बढ़े। जो ही इसको मारते हुए क्रूर कर्म किया है उसे आप्यायित करते हैं)। यदि यह (स्रुग-

---

१. मै० सं० ३।८।२॥

२. मै० संहितायां (३।८।२) त्वित्थं पठ्यते—अवधिषुर्वा एतत् सोमं यदस्य स्रुचं चाज्यं चान्तिकमकार्षुर्यदाह अंशुरंशुस्ते देव सोमाप्यायतामिति। यदेवास्य घ्नन्तं क्रूरमक्रस्तदक्रूरमक्रंस्तदाप्यायति। (भाष्यपाठे योऽपपाठ आसीत् तस्य मै० सहितापाठाधारेण शोधनं कृतम्।)

वाक्यं भिद्येत । तस्मान्न विधिः ॥८॥

शङ्कते चानुपोषणात् ॥९॥ (उ०)

सोमे शङ्कते—यदनुपोष्य प्रयायाद् ग्रीवबद्धमेनममुष्मिँल्लोके नेनीयेरन्'[1] इति । दार्शपौर्णमासिके विध्यन्ते सति नियतमुपोषणं स्यात् । तानुपोषणाशङ्का न युज्यते ।[2] तस्मादपूर्वः ॥९॥

---

भिधारण का अनुवाददर्शन) भी विधि होवे तो वाक्य भेद होवे । इससे [यह प्रतिषेध] विधि नहीं है ॥८॥

विवरण—भाष्यकार ने जो सूत्र ६ तथा इस ८वें सूत्र के भाष्य में वैदिक वचन उद्धृत किये हैं उनका कुछ भाग मै० सं० ३।८।२ में मिलता है कुछ भाग नहीं मिलता । सम्भव है वह मैत्रायणी की किसी अवान्तर शाखा का पाठ हो ॥८॥

शङ्कते चानुपोषणात् ॥९॥

सूत्रार्थः—(च) और (अनुपोषणात्) वेदि के अनुपोषण से (शङ्कते) शङ्का करता है उससे भी सोम अपूर्व कर्म है ।

विशेष—अनुपोषण तथा तद्विषयक शङ्का भाष्य में देखें ।

व्याख्या—सोम में शङ्का करता है—यदनुपोष्य प्रयायाद् ग्रीवबद्धमेनममुष्मिँल्लोके नेनीयेरन् (=यदि वेदि का प्रदाह विना किये यजमान मर जाये तो ग्रीवा से बन्धे हुए इस यजमान को परलोक में यमभृत्य ले जायें) । दार्शपौर्णमासिक विध्यन्त होने पर [बर्हि का] उपोषण नियमित रूप से होवे । उस स्थिति में अनुपोषण की शङ्का युक्त नहीं होती । इससे सोम अपूर्व है ॥९॥

विवरण—यदनुपोष्य—'न उप ओष्य' उष दाहे ण्यन्त से ल्यप् । एङि पररूपम्(अष्टा० ६।१।९४) इत्यनेन पररूपम् । तै० सं० ३।३।८ में 'यदनुपोष्य' पाठ है । उसमें 'वृद्धिरेचि' (अष्टा० ६।१।८८) से छान्दस वृद्धि जाननी चाहिये । अथवा 'ओकारौकारपर औकारम्' इस तैत्तिरीयप्रातिशाख्य-वचन से वृद्धि होती है । ग्रीवबद्धम् यहां ङ्यापोः संज्ञाछन्दसोर्बहुलम्(अष्टा० ६।३।६३) से पूर्वपद को ह्रस्व हुआ है । नियतमुपोषणम्—दर्शपूर्णमास में कर्म के अन्त में वेदि में आस्तृत बर्हि का अग्नि में प्रक्षेप होता है । दार्शपौर्णमासिक धर्म की सोम में प्रवृत्ति होने पर बर्हि का उपोषण नियमित रूप से होवे उस अवस्था में अनुपोष्य यायात् शङ्का ही उपपन्न नहीं

---

१. तै० सं० ३।३।८।३-४॥ तै० सं० तु 'अनुपोष्य' पाठः ।

२. इतोऽग्रे 'अपूर्वत्वे तु प्रागुपोषणविधानाद् उपोष्यानुपोष्य वा प्रयायात् । तत्रानुपोषणशङ्का युज्यते' इत्यधिकः पाठः । अत्र 'प्रागुपोषणविधानात्' पाठेन भाव्यम् ।

## दर्शनम् ऐष्टिकानां स्यात् ॥१०॥ (उ०)

यच्च प्रयाजानुयाजानां दर्शनं लिङ्गत्वेनापदिष्टं[1], तस्यैकशतं प्रयाजानुयाजा इति। तद् दीक्षणीयादीनां सोमाङ्गभूतानां कर्मणां ये प्रयाजानुयाजास्तेषां समुच्चयवचनम्। किं कारणम्? सोमस्यापूर्वत्वात्। तेषां च तावतां तत्राभावात्। अङ्गाङ्गमपि च तस्येति शक्यते वक्तुम्। यथा वाजपेयस्य यूप इति। तस्मादपूर्वः सोमः ॥१०॥

———

होती है। न युज्यते—इससे आगे पूना संस्करण में 'अपूर्वत्वे तु प्रागुपोषणविधानाद् उपोष्यानुपोष्य वा प्रयायात्। तत्रानुपोषणशङ्का युज्यते पाठ अधिक है। इसका भाव है—सोम के अपूर्व होने पर पहले उपोषण के विधान होने से उपोष्य अनुपोष्य वा मरे। इसमें अनुपोषण शङ्का युक्त है। उस पाठ में 'प्रागुपोषणविधानात्' (=पूर्व उपोषण के विधान होने से) पाठ अशुद्ध है। उपोषण का पूर्व विधान होने पर अनुपोषण की शङ्का हो ही नहीं सकती। तथा तै० सं० में पूर्व उपोषण का विधान है ही नहीं। अतः पूना पाठ को स्वीकार करने पर भी प्रागुपोषणाविधानात् पाठ होना चाहिये ॥९॥

### दर्शनमैष्टिकानां स्यात् ॥१०॥

सूत्रार्थः—जो प्रयाज अनुयाजों का (दर्शनम्) दर्शन कहा है वह (ऐष्टिकानाम्) सोमाङ्गभूत दीक्षणीयादि कर्मों का (स्यात्) होवे।

व्याख्या—और जो प्रयाजों और अनुयाजों का दर्शन लिङ्ग रूप कहा है - तस्यैकशतं प्रयाजानुयाजाः (=उसके एक सौ एक प्रयाज और अनुयाज हैं) वह सोमाङ्गभूत दीक्षणीयादि कर्मों के जो प्रयाज और अनुयाज हैं उनका समुच्चय वचन है। क्या कारण है? सोम के अपूर्व होने से। और उन [प्रयाजानुयाजों] के उतने वहां न होने से। उस [सोम] के अङ्ग [दक्षिणीयादि] के अङ्ग भी कह सकते हैं। जैसे वाजपेय का यूप [व्यवहार होता है]। इससे सोम अपूर्व है ॥१०॥

विवरण—वाजपेयस्य यूपः—यूप वाजपेय के पशुयाग में है, परन्तु उसे जिस प्रकार 'वाजपेय का यूप' कहा जाता है इसी प्रकार सोम के अङ्गभूत दीक्षणीयादि इष्टियों के अङ्गभूत प्रयाज अनुयाज सोम के भी कहे जा सकते हैं ॥१०॥

———

१. 'लिङ्गत्वेनोपदिष्टम्' पाठान्तरम्।

[ऐन्द्राग्नादिषु दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् ॥४॥]

इष्टय उदाहरणम्—ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः[1] इत्येवमाद्याः। तत्र सन्देहः—किं दार्शपौर्णमासिको वा, सौमिको वा विध्यन्त उत दार्शपौर्णमासिक एवेति ? किं प्राप्तम् ? अनियमः। दर्शपूर्णमासयोरपि विध्यन्तोऽस्ति सोमेऽपि। इमाश्चेष्टयो विध्यन्तापेक्षाः। एकेन च विध्यन्तेन भवितव्यमित्युक्तम्। न च गृह्यतेऽन्यतरनियमे विशेषः। तस्मादनियमः। एवं प्राप्ते उच्यते—

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥११॥ (उ०)

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः। हेतुर्नोक्तः प्रज्ञात इति। कः पुनरसौ ? चोदनायां प्रकृतिलिङ्गसंयोगः। किं पुनस्तत् प्रकृतिलिङ्गम् ? तद्धितेन देवतोपदेशः, कपालवत्ता, निर्वपतिशब्दश्च, ऐन्द्राग्नमेकादशकपालं निर्वपेद्[2] इति। इतरत्रापि

---

**व्याख्या**—इष्टियां उदाहरण हैं—ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः (=प्रजा की कामना वाला इन्द्राग्नीदेवता वाले एकादशकपाल का निर्वाप करे) इत्यादि। उनमें सन्देह होता है—क्या इनमें दर्शपूर्णमास का विध्यन्त होवे वा सोम का विध्यन्त अथवा दर्शपूर्णमास का ही विध्यन्त होवे ? क्या प्राप्त होता है ? अनियम प्राप्त होता है [क्योंकि] दर्शपूर्णमाससम्बन्धी विध्यन्त भी है और सोमसम्बन्धी भी। ये इष्टियां विध्यन्त की अपेक्षा रखने वाली हैं। एक विध्यन्त को होना चाहिये यह कह चुके। दोनों में से किसी एक के नियम में विशेष नहीं जाना जाता है। इससे अनियम होवे। ऐसा प्राप्त होने पर कहते हैं—

**इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥११॥**

**सूत्रार्थः**—(इष्टिषु) इष्टियों में (दर्शपूर्णमासयोः) दर्शपूर्णमास के विध्यन्त की (प्रवृत्तिः) प्रवृत्ति (स्यात्) होवे।

**विशेष**—इष्टि शब्द से वे कर्म कहे जाते हैं जो अध्वर्यु आग्नीध्र, होता एवं ब्रह्मा चार ऋत्विजों से सम्पाद्यमान तथा सपत्नीक यजमानकर्तृक होते हैं। द्र०—श्रौतपदार्थनिर्वचन, ऐष्टिक पदार्थ, संख्या १।

**व्याख्या**—इष्टियों में दर्शपूर्णमास [के विध्यन्त] की प्रवृत्ति होवे। हेतु नहीं कहा गया है यतः वह प्रज्ञात (=विज्ञात) है। वह कौनसा है ? चोदना में प्रकृति के लिङ्ग का संयोग। वह प्रकृति का लिङ्ग क्या है ? तद्धित से देवता का उपदेश (=कथन), कपालवत्ता और निर्वपति शब्द—ऐन्द्राग्नमेकादशकपालं निर्वपेत् (=इन्द्र और अग्निदेवतावाले एकादश-

---

१. तै० सं० २।२।१।१॥ २. द्र०—तै० सं० २।२।१।१॥

तथैव, ऐन्द्राग्नो द्वादशकपाल:[1] इति। निर्वपतिरपि—अग्निहोत्रहवण्या हवींषि निर्वपति[2] इति। प्रकृतिलिङ्गेन च विध्यन्तविशेष उक्त:—यस्य लिङ्गमर्थसंयोगाद्[3] इति। तस्माद् दार्शपौर्णमासिकस्तासु विध्यन्त:। तच्च दर्शयति—प्रयाजे प्रयाजे कृष्णलं जुहोति[4] इति। अलिङ्गास्वपि स्थालीपुलाकवत्सिद्धि: ॥११॥

———

[अग्नीषोमीये पशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् ॥५॥]

पशावग्नीषोमीये चिन्त्यते—किं दार्शपौर्णमासिको विध्यन्त उत सौमिक इति? किं प्राप्तम्? तथैव पूर्वपक्ष:[5]। तत्रोत्तरमभिधीयते—

---

कपाल का निर्वाप करे)। अन्यत्र भी वैसे ही है—ऐन्द्राग्नो द्वादशकपाल: (=ऐन्द्राग्न देवतावाला द्वादशकपाल)। 'निर्वपति' भी—अग्निहोत्रहवण्या हवींषि निर्वपति (=अग्निहोत्रहवणी से हवियों का निर्वाप करता है। प्रकृति के लिङ्ग से भी विध्यन्त विशेष कहा है—यस्य लिङ्गमर्थसंयोगात् (=जिस आग्नेयादि विध्यन्त का कोई शब्दगत वा अर्थगत विकृति में दिखाई पड़े उसका वह विध्यन्त होवे अर्थ के संयोग से)। इससे दर्शपूर्णमाससम्बन्धी विध्यन्त उन इष्टियों में होता है। और उसे दर्शाता है—प्रयाजे प्रयाजे कृष्णलं जुहोति (=प्रतिप्रयाज एक एक कृष्णल का अग्नि में होम करता है)। जिन विकृतियों में कोई लिङ्ग नहीं है उनमें भी स्थालीपुलाक न्याय की तरह सिद्धि जानी जाती है ॥११॥

विवरण—ऐन्द्राग्नमेकादशकपालम्—यह विकृति याग है। इतरत्रापि तथैव—इतरत्र अर्थात् प्रकृतियाग दर्शपूर्णमास में भी वैसे ही लिङ्ग तद्धित से देवता संयोग और कपालवत्ता कही है। ऐन्द्राग्नो द्वादशकपाल:—यह असान्नाय्ययाजी के दर्शयाग में कहा है। अग्निहोत्रहवण्या—यह पूर्णमास में हविनिर्वाप के प्रकरण में पठित है ॥११॥

———

व्याख्या—अग्नीषोमीय पशु में विचार करते हैं—क्या दर्शपूर्णमाससम्बन्धी विध्यन्त होवे अथवा सोमसम्बन्धी। क्या प्राप्त होता है? उसी प्रकार पूर्वपक्ष [जानना चाहिये]। उसमें उत्तर देते हैं—

विवरण—सोमयाग में सुत्या से पूर्व दिन (चतुर्थ दिन) अग्नीषोमीय पशु का आलभन होता है। संहिता (शाखा) एवं ब्राह्मणग्रन्थों में यह अग्नीषोमीय सोमयाग के प्रकरण में पढ़ा

---

१. द्र०—ऐन्द्राग्नो द्वादशकपाल: पुरोडाशो भवति। शत० ११।६।४।३॥
२. आप० श्रौत १।१७।१०॥ ३. मी० ८।१।२॥
४. तै० सं० २।३।२।३॥ ५. 'पूर्व: पक्ष:' पाठान्तरम्।

## पशौ च लिङ्गदर्शनात् ॥१२॥ (उ०)

पशौ च लिङ्गदर्शनात्। पशौ च दार्शपौर्णमासिक एव विध्यन्तः। कुतः? लिङ्गदर्शनात्। एकादश प्रयाजान् यजति[1], एकादशानुयाजान्[2] इति। तथा—स्रौचमाघारमाघार्य जुह्वा पशुमनक्ति[3] इति। ननु लिङ्गमपदिष्टं, कुतः प्राप्तिः? चोदनासामान्यात्। किं सामान्यम्? व्यक्तचोदनात्वम्[4]। का व्यक्तिः? द्रव्य-देवतावत्ता, अग्नीषोमीयं पशुम्[5] इति। इतरत्, ऐन्द्रं पयः[6] इति। अव्यक्तचोदनस्तु सोमः ॥१२॥

———

है और यही सब पशुयाग के धर्म आम्नात हैं। यही अग्नीषोमीय पशु अन्य पशुयागों की प्रकृति है। श्रौतसूत्रों में पशुयाग के समस्त धर्म निरूढ पशुबन्ध में पढ़े हैं। यह भेद ध्यान में रखना चाहिये।

### पशौ च लिङ्गदर्शनात् ॥१२॥

सूत्रार्थः—(पशौ) पशु में (च) भी (लिङ्गदर्शनात्) लिङ्ग के दर्शन से दर्शपूर्णमास सम्बन्धी विध्यन्त होता है। [लिङ्गदर्शन भाष्य में देखें]।

व्याख्या—पशु में भी लिङ्गदर्शन से। पशु में भी दार्शपौर्णमासिक ही विध्यन्त होता हैं। किस हेतु से? लिङ्गदर्शन से। एकादश प्रयाजान् यजति एकादशानुयाजान् (=ग्यारह प्रयाजों का यजन करता है, ग्यारह अनुयाजों का)। तथा—स्रौचमाघारमाघार्य जुह्वा पशुमनक्ति (=स्रुक् सम्बन्धी आघार का आघरण करके जुहू से पशु को घृत लगाता है। लिङ्ग का कथन किया है, प्राप्ति किस हेतु से होती है? चोदना सामान्य से। सामान्य क्या है? व्यक्त चोदनात्व। व्यक्ति क्या है? द्रव्यदेवतावत्त्व अर्थात् द्रव्य और देवता का सम्बन्ध—अग्नीषोमीयं पशुम्। [यहां अग्नीषोम देवता और पशु का सम्बन्ध व्यक्त है।] अन्य ऐन्द्रं पयः (=दर्शेष्टि में इन्द्र और पयः द्रव्य का सम्बन्ध है)। सोम अव्यक्त चोदना वाला है ['अग्निष्टोमेन यजेत' इस चोदना में देवता और द्रव्य का सम्बन्ध नहीं कहा है।१२।

———

१. तै० सं० ६।३।७।५॥ २. तै० सं० ६।३।११।६॥

३. अनुपलब्धमूलम्। द्र०—स्रुच्यमाघार्य प्रत्याक्रम्य जुह्वा पशुं समनक्ति। आप० श्रौत ७।१४।१॥ काशीमुद्रिते भाष्यपुस्तके 'स्रौवम्' इत्यपपाठः।

४. 'व्यक्तचोदनत्वं'—पाठान्तरम्।

५. तै० सं० ६।१।११।६॥ भाष्य एकदेश उद्धृतः।

६. अनुपलब्धमूलम्। शाङ्खा० ५।४॥

[सवनीयादिपशुष्वग्नीषोमीयधर्मातिदेशाधिकरणम् ॥६॥]

इह पशुबन्धा उदाहरणम्—सवनीयो, निरूढः पशुः, सौम्यादयश्च। तेषु किं दार्शपौर्णमासिको विध्यन्त उत दैक्षस्येति ? दैक्ष इत्यग्नीषोमीय उच्यते, दीक्षासम्बन्धात्। किं प्राप्तम् ? यथोक्तेन न्यायेन दार्शपौर्णमासिक इति। तथा प्राप्ते, उच्यते—

दैक्षस्य चेतरेषु ॥१३॥ (उ०)

दैक्षस्य चेतरेषु पशुषु सवनीयादिष्वग्नीषोमीयस्य विध्यन्तः। आलभतिचोदनासामान्यात्, पशुत्वचोदनासामान्याच्च। तच्च दर्शयति—वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने[1] इति वपापुरोडाशाङ्गप्रचारं

---

व्याख्या—यहां पशुबन्ध उदाहरण हैं- सवनीय, निरूढ पशु, सौम्य आदि। उनमें क्या दर्शपूर्णमास सम्बन्धी विध्यन्त होता है अथवा दैक्ष का ? दैक्ष शब्द से अग्नीषोमीय पशु कहा जाता है दीक्षा के सम्बन्ध से। क्या प्राप्त होता है ? यथोक्त ( = पूर्वोक्त)न्याय से दर्शपूर्णमास सम्बन्धी विध्यन्त प्राप्त होता हैं। ऐसा प्राप्त होने पर कहते हैं—

विवरण—सौम्यादयः—सोम में होने वाला सवनीय पशु। सौम्य शब्द से सोम देवता वाले अन्य पशु का ग्रहण भी हो सकता है। आदि शब्द से अन्य पशुओं का निर्देश जानना चाहिये। दीक्षासम्बन्धेन—सोमयाग के आरम्भ में यजमान दीक्षा ग्रहण करता है। एकादीक्षा पक्ष में तीन दिन उपसद् इष्टियां होती हैं। चतुर्थ दिन अर्थात् तीसरी उपसद् के दिन अग्नीषोमीय पशु का आलभन होता है। इस प्रकार दीक्षा सम्बन्ध से अग्नीषोमीय दैक्ष कहा गया है।

दैक्षस्य चेतरेषु ॥१३॥

सूत्रार्थः—(दैक्षस्य) दीक्षा प्रकरण में होनेवाले अग्नीषोमीय पशु का विध्यन्त (च) भी (इतरेषु) अन्य पशुओ में जानना चाहिये। अर्थात् अग्नीषोमीय पशुयाग इतर पशुयागों की प्रकृति है।

विशेष—यहां उपरि निर्दिष्ट विवरण देखें।

व्याख्या—दैक्ष का भी इतर पशुओं सवनीय आदि में अग्नीषोमीय का विध्यन्त जानना चाहिये। 'आलभति' चोदना के सामान्य से और पशुत्व चोदना के सामान्य से। उसे दर्शाता है—वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने( = वपा से प्रातःसवन में यजन होता है,पुरोडाश से माध्यन्दिन में और अङ्गों से तृतीय सवन में) इससे वपा पुरोडाश और अङ्गों का प्रचार दर्शाता है। और कहीं भेद से भी—औदुम्बरो यूपो

---

१. द्र०—मै० सं० ३।९।५॥

दर्शयति। भेदेन च तथा क्वचित्—**औदुम्बरो यूपो भवति**[1] इति यूपं दर्शयति। तस्मादग्नीषोमीयः पशूनां प्रकृतिः ॥१३॥

———

[ऐकादशिनेषु पशुषु सवनीयपशुधर्मातिदेशाधिकरणम् ॥७॥]

ऐकादशिनाः पशव उदाहरणम्—**कृष्णशीर्ष आग्नेय** इत्यारभ्याऽऽम्नाताः[2]। अन्येषां च—**आग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, प्रजनयति सौम्येन**[3] एति। तेषु सन्देहः। किमग्नीषोमीयविध्यन्त उत सवनीयविध्यन्त इति। किं प्राप्तम्? पूर्वोक्तेन न्यायेनाग्नीषोमीयस्येति प्राप्ते उच्यते—

## ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥१४॥ (उ०)

---

भवति (=गूलर का यूप होता है) से यूप को दर्शाता है। इसलिये अग्नीषोमीय पशुओं की प्रकृति है ॥१३॥

———

व्याख्या—एकादशिनी के पशु उदाहरण हैं—कृष्णशीर्ष आग्नेयः से आरम्भ करके आम्नात ११ पशु। अन्यों के भी—आग्नेयेन वापयति, मिथुनं सरस्वत्या करोति, प्रजनयति सौम्येन (=आग्नेय पशु से बीज का वपन कराता है, सारस्वती मेषी के साथ मिथुन करता है, सौम्य पशु से प्रजा उत्पन्न करता है)। इनमें सन्देह है। क्या इनमें अग्नीषोमीय पशु का विध्यन्त होवे अथवा सवनीय पशु का विध्यन्त होवे। क्या प्राप्त है? पूर्वोक्त न्याय से अग्नीषोमीय का विध्यन्त होवे। ऐसा प्राप्त होने पर कहते हैं—

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥१४॥**

**सूत्रार्थः**—(ऐकादशिनेषु) एकादशिनी के पशुओं में (सौत्यस्य) सुत्या (=सोमाभिषव) के दिन होनेवाले सवनीय पशु के विध्यन्त होवें (द्वैरशनी) दो रशनात्व (अस्य) इसके (दर्शनात्) दर्शन से।

---

१. तै० सं० २।१।१।६॥

२. स्वल्पभेदेन—१ कृष्णशीर्षाग्नेयो, २ मेषी सारस्वती, ३ बभ्रुः सौम्यः, ४ श्यामः पौष्णः, ५ शितिपृष्ठो बार्हस्पत्यः, ६ पिशङ्गो वैश्वदेवो, ७ वृष्णिरैन्द्रः, ८ कल्माषो मारुतः, ९ संहित ऐन्द्राग्नो, १० अधोरामः सावित्रः, ११ पैलो वारुणः॥ मै० सं० ४।७।८॥

३. द्र०—आग्नेयेन वापयति मिथुनं सरस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति। तै० सं० ६।६।५।१-२॥

ऐकादशिनेषु सौत्यस्य। सौत्य इति सुत्याकालत्वात् सवनीयमाहुः। तदीयो विध्यन्त ऐकादशिनेषु। कुतः? द्वैरशन्यस्य दर्शनात्। 'अग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति' इति। अग्नीषोमीप्रकृतित्वे एकैक-रशन्यं स्यात्। अथ वचनमिदं कस्मान्न भवति? अग्निष्ठाद् द्वे द्वे रशने आदाये-त्येतदत्र विधीयते। यदि रशनाद् द्वित्वमपि विधीयते तदा वाक्यं भिद्यते। तस्मात् तदनूद्यते। ननु लिङ्गमपदिष्टं, कुतः प्राप्तिः? उच्यते। समाने पशुत्वे सुत्या-कालता वैशेषिकं लिङ्गम्। ततः प्राप्तिः ॥१४॥

———

व्याख्या—ऐकादशिन पशुओं में सौत्य का विध्यन्त होवे। सौत्य यह सुत्याकाल होने से सवनीय को कहते हैं। उनका विध्यन्त ऐकादशिन पशुओं में होवे। किस हेतु से? इसके (=ऐकादशिन पशुओं के) द्विरशनावाला देखे जाने से। अग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति (=अग्निष्ठ यूप से दो रशनाएं लेकर दो रशनाओं से एक एक यूप का परिव्ययण करता है)। अग्नीषोमीय प्रकृति होने पर एक एक रशना वाला होवे। (आक्षेप) अच्छा तो यह वचन क्यों नहीं होता? (समाधान) अग्निष्ठाद् द्वे द्वे रशने आदाय यह यहां विधान किया है। यदि रशनाद्वित्व का भी विधान करें तो वाक्यभेद होवे। इसलिये उस (=रशनाद्वित्व) का अनुकथन किया जाता है। (आक्षेप) आपने लिङ्ग का कथन किया है, प्राप्त कैसे होती है? (समाधान) समान पशुत्व होने पर सुत्याकालता विशिष्ट लिङ्ग है। अर्थात् सभी ११ पशुओं का सुत्या के दिन ही आलभन विशिष्ट लिङ्ग है। उससे प्राप्ति होती है ॥१४॥

विवरण—द्वैरशन्यस्य दर्शनात्—ऐकादशिन पशुओं के द्विरशनावाले होने से। कुतूहल-वृत्ति में कहा है—ऐकादशिन पशुओं के दो रशना वाले होने से द्विरशना यूपा भवन्ति (=दो रशनावाले यूप होते हैं)। अग्निष्ठाद् द्वे द्वे रशने आदाय—अग्निष्ठ यूप का पहले तक्षणादि कर्म होता है। उसमें सभी पशुओं की रशनाएं लपेट दी जाती हैं। प्रति यूप पशु को बांधने से पूर्व अग्निष्ठ यूप में लपेटी हुई रशनाओं में से दो दो रशनाएं प्रत्येक यूप में लपेटी जाती हैं। सवनीय पशु के लिये भी दो रशनाएं कही हैं—त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोति। आप० श्रौत १२।१८।१२॥ इस पर रुद्रदत्त की व्याख्या—पूर्वरशनामुत्क्षिप्य त्रिवृतान्यया परि-व्ययति, न तु तामेवादाय, पुनस्त्रिवृतवचनात्—अर्थात् पूर्व जो यूप में त्रिवृत रशना लपेटी गई थी उसको हटाकर अन्य त्रिवृत रशना से यूप को लपेटता है। न कि उसी पूर्व रशना को लेकर, पुनः त्रिवृत वचन से अर्थात् पूर्व रशना त्रिवृत थी ही यदि उसी से लपेटना होता तो पुनः त्रिवृत कहना व्यर्थ होता ॥१४॥

१. अनुपलब्धमूलम्।

**[पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम् ॥८॥]**

इह पशुगणा उदाहरणम्—**वसन्ते ललामांस्त्रीन् वृषभान् आलभते**[1]। तथा—**मैत्रं श्वेतमालभते, वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः**[2] इति। तत्र विचार्यते—किमग्नीषोमीयस्य विध्यन्त उतैकादशिनानामिति? यथोक्तेन न्यायेनाग्नीषोमीयस्य। एवं प्राप्त उच्यते—

**तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु यूपदर्शनात् ॥१५॥ (उ०)**

तत्प्रवृत्तिर्गणेषु स्यात्। तेषामेकादशिनानां प्रवृत्तिः पशुगणेषु स्यात्। कुतः? प्रतिपशु यूपदर्शनात्। **यत् त्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्य जनयेदेकयूप आलभेत**[3] इति यूपत्रित्वं प्रतिषिध्यैकं यूपं सौत्रामण्यां विदधाति। तदुपपद्यते, यदि ऐकादशिनविध्यन्तः। तत्र हि प्रतिपशु यूपाः। अग्नी-

---

व्याख्या—यहां पशुगण उदाहरण हैं—वसन्ते ललामांस्त्रीन् वृषभान् आलभते (=वसन्त में तीन ललाम वृषभों का आलभन करे)। तथा—मैत्रं श्वेतमालभते, वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः (=अन्नकाम पुरुष मित्रदेवता वाले श्वेत पशु का आलभन करे वरुण देवता वाले कृष्ण पशु का, जलों और ओषधियों की सन्धि में)। इस में विचार करते हैं—क्या इन में अग्नीषोमीय पशु का विध्यन्त होवे अथवा ऐकादशिनियों का? यथोक्त न्याय से अग्निषोमीय का विध्यन्त होवे। ऐसा प्राप्त होने पर कहते हैं—

विवरण ललामांस्त्रीन्—श्वेत पुण्ड्रवाल के चिह्नों से युक्त पशु ललाम कहा जाता है।

**तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु यूपदर्शनात् ॥१५॥**

सूत्रार्थः—(गणेषु) पशुगणों में (तत्प्रवृत्तिः) ऐकादशिन की प्रवृत्ति (स्यात्) होवे। (प्रतिपशु) प्रति पशु (यूपदर्शनात्) यूप के दर्शन से।

व्याख्या—उस (=ऐकादशिन) की प्रवृत्ति गणों में होवे। उन ऐकादशिनों के वि यन्त की प्रवृत्ति पशुगणों में होवे। किस हेतु से? प्रतिपशु यूप के दर्शन से। यत् त्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् भ्रातृव्यमस्य जनयेदेकयूपे आलभेत (=जो तीन यूपों में आलभन करे उस से इन्द्रिय वीर्य को करे, इस के भ्रातृव्य को उत्पन्न करे यदि एक यूप में आलभन करे)। इस से तीन यूपों का प्रतिषेध करके एक यूप का सौत्रामणि में विधान करता है। वह उपपन्न होता है यदि ऐकादशिनों का विध्यन्त होवे। वहां (= ऐकादशिनों में) प्रति

---

१. अनुपलब्धमूलम्। द्र०—वसन्ता प्रातस्त्रीन् ललामानालभेत। तै० सं० २।१।४।१॥

२. तै० सं० २।१।६।२॥

३. अतिस्वल्पभेदेन तै० ब्रा० १।८।६।१॥

षोमीयप्रकृतित्व एक एव यूपः स्यात्। तत्रैतन्नोपपद्यते। तस्माद् ऐकादशिनानां विध्यन्तः पशुगणेषु ॥१५॥

———

[अव्यक्तयागेषूद्भिदादषु सौमिकधर्मातिदेशाधिकरणम् ॥६॥]

इदं श्रूयते—अभिजिता यजेत[1], विश्वजिता यजेत[2] इत्येवंजातीयका यजतयः। तेषु विध्यन्तचिन्ता—किमेषु सौमिको विध्यन्त उत दार्शपौर्णमासिक इति ? अविशेषादनियमे प्राप्ते उच्यते—

अव्यक्तासु तु सोमस्य ॥१६॥ (उ०)

---

पशु यूप है। अग्नीषोमीय प्रकृतित्व होने पर एक ही यूप होवे। वहां यह (=त्रित्वप्रतिषेध) उपपन्न नहीं होता। इससे ऐकादशिनों का विध्यन्त पशुगणों में होवे ॥१५॥

विवरण—यूपत्रित्वं प्रतिषिध्य तीन ललामों के लिये तीन यूपों का प्रतिषेध यत् त्रिषु यूपेष्वालभते वाक्य में कहकर एक यूप का विधान किया है। तीन ललामों के लिये तीन यूपों की प्राप्ति ऐकादशिन की विध्यन्त प्राप्त होने पर ही होती है क्योंकि वहां प्रति पशु यूप कहा है। अग्नीषोमीयप्रकृतित्वे—पशुगणों में अग्नीषोमीय विध्यन्त की प्रवृत्ति होने पर एक यूप की ही प्राप्ति होगी क्योंकि अग्नीषोमीय में एक ही यूप है। उस अवस्था में तीन यूपों का प्रतिषेध उपपन्न नहीं होगा ॥१५॥

———

व्याख्या—यह सुना जाता है-अभिजिता यजेत (=अभिजित् से यजन करे), विश्वजिता यजेत (=विश्वजित् से यजन करे) इत्यादि यजतियां। उनमें विध्यन्त की चिन्ता होती है—क्या इन में सौमिक विध्यन्त होवे अथवा दर्शपूर्णमास का ? विशेष श्रुत न होने से अनियम प्राप्त होने पर कहते हैं—

अव्यक्तासु तु सोमस्य ॥१६॥

सूत्रार्थः—(अव्यक्तासु) अव्यक्त चोदनाओं में (तु) तो (सोमस्य) सोम का विध्यन्त होवे।

---

१. तै० सं० ५।६।५।१॥ द्र०- ताण्डय ब्रा० १६।८।४—अभिजिता वै देवा इमान् लोकान् अभ्यजयन्।

२ अनुपलब्धमूलम्। द्र० –तृतीये संवत्सरेऽभिजिता यजेत विश्वजिता वा यजेत सर्ववेदसं दक्षिणा। आप० श्रौत १७।२६।१२,१३॥; ताण्डय ब्रा० १६।८।४—विश्वजिता विश्वमजयन्।

अव्यक्तासु तु सोमस्य। काऽव्यक्तता? द्रव्यदेवतस्याभावः। द्रव्यदेवतेन हि यागोऽभिव्यज्यते। एताश्चाद्रव्यदेवतादचोदनाः, **अभिजिता यजेत**' इति। एतास्वव्यक्तासु सौमिको विध्यन्तः स्यात्। कुतः? अव्यक्तसामान्यात्। सोमोऽप्यव्यक्तचोदनः। **ज्योतिष्टोमेन यजेत**[1] इति। ननु, **सोमेन यजेत**[2] इत्येषा व्यक्तचोदना। तथाऽपि देवताया अभावादव्यक्तता। तथा च, **दूणाशेन**[3] **यजेत**[4] इत्यव्यक्तचोदिते, दीक्षणीयादीनि सोमाङ्गानि दर्शयति—**दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायाम्**[5] इति। तस्मात् तासु सौमिको विध्यन्तः॥१६

———

व्याख्या—अव्यक्त चोदनाओं में तो सोम का विध्यन्त होवे। अव्यक्तता क्या है? द्रव्य देवता का अभाव। द्रव्य और देवता से ही याग अभिव्यक्त होता है। ये चोदनाएं द्रव्य और देवता से रहित हैं—अभिजिता यजेत। इन अव्यक्त चोदनाओं में सौमिक विध्यन्त होवे। किस हेतु से? अव्यक्तत्व के सामान्य से। सोम भी अव्यक्त चोदना वाला है ज्योतिष्टोमेन यजेत। (आक्षेप) सोमेन यजेत यह व्यक्त चोदना है। (समाधान) तथापि देवता के अभाव से अव्यक्तता है तथा दूणाशेन यजेत (=दूणाश नाम के याग से यजन करे) इस अव्यक्त चोदना वाले याग में दीक्षणीयादि सोमाङ्गों को दर्शाता है—दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा (=दीक्षणीयेष्टि में द्वादशमान हिरण्य दक्षिणा होती है), चतुर्विंशतिमानं प्रायणीयायाम् (=चतुर्विंशतिमान हिरण्य दक्षिणा प्रायणीयेष्टि में होती है)। इस लिये उन अव्यक्त चोदना वाले यागों में सौमिक विध्यन्त होता है॥१६॥

**विवरण**—**व्यक्तचोदना**—सोम द्रव्य के श्रुत होने से पूर्वपक्षी ने इसे व्यक्त चोदना कहा है। सिद्धान्ती सोमद्रव्य के श्रुत होने पर भी देवता के अभाव से अव्यक्तता दर्शाता है। **दूणाशेन यजेत**—दूणाश याग का दूसरा नाम 'बहुहिरण्य' है (द्र०—कात्या० श्रौत २२।८।२५)। पुणे

---

१. द्र०—वसन्ते वसन्ते ज्योतिष्टोमेन यजेत। आप० श्रौत १०।२।५॥

२. द्र०—य एवं विद्वान् सोमेन यजते। तै० सं० ३।२।२।३॥

३. पुणेमुद्रिते संस्करणे सम्पादकेन टिप्पण्यां 'दूणाशेन इति पाठो लिखिते मुद्रिते च दृश्यते' इत्युक्त्वाऽत्र 'श्येनेन' इत्येवं पाठः शोधितः। स तूत्तरवाक्याननुकूलः। उद्धृतोद्धरणं तु दूणाशयाग एवोपलभ्यते।

४. अनुपलब्धमूलम्। द्र०—द्विनामोत्तरो बहुहिरण्यो दूणाशश्च। कात्या० श्रौत २२।८।२५॥

५. अनुपलब्धमूलम्। दीक्षणीयायां हिरण्यं द्वादशमानं ददाति, उत्तरेषु च द्विगुणं पूर्वं पूर्वम्, प्रायणीयाऽऽतिथ्योपसत्सु। कात्या० श्रौत २२।६।१,२,३॥ तथा द्र०—आप० श्रौत २२।६।२०॥

[अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥१०॥]

इह अहर्गणा उदाहरणम्—द्विरात्रादयः शतरात्रपर्यन्ताः। तेषु सन्देहः—किं ज्यौतिष्टोमिको विध्यन्त उत द्वादशाहिक इति ? पूर्वेण न्यायेन सौमिके प्राप्ते, उच्यते—

**गणेषु द्वादशाहस्य ॥१७॥ (उ०)**

गणेषु द्वादशाहिको विध्यन्त इति। कुतः ? चोदनासामान्यात्। द्वादशाहेन यजेत[2], द्विरात्रेण यजेत[3] इति। अहःशब्दोऽप्यहोरात्रवचनः, रात्रिशब्दोऽपि। एत-

---

मुद्रित संस्करण के सम्पादक ने टिप्पणी में 'दूणाशेन इति पाठो लिखिते मुद्रिते च दृश्यते' ऐसा लिखकर मूल भाष्य में 'दूणाशेन' के स्थान पर 'श्येनेन' पाठ छापा है। यह उत्तरभाष्य से विपरीत है वहां जो उद्धरण दिया है वय दूणाशयागसम्बन्धी है न कि श्येनयागसम्बन्धी। आपस्तम्ब में इस याग का 'बहुहिरण्य' नाम से उल्लेख होने से सम्पादक को 'दूणाश' नामान्तर का ज्ञान न होने से उसने लिखित और मुद्रित पाठ की उपेक्षा करके मनमाना संशोधन किया है। द्वादशमानं हिरण्यं दक्षिणा —'मीयते हिरण्यादिकं येन तन्मानम्' जिस परिमाण से बनिये हिरण्य आदि तोलते हैं वह यहां 'मान' कहा गया है। आपस्तम्ब श्रौतसूत्र ५।२१।१० में स्पष्ट कहा है—येन हिरण्यं मिमीते तेन मीत्वा ददाति। वह मान क्या है? इसका उल्लेख रुद्रदत्त ने नहीं दर्शाया। धूर्तस्वामी ने—आद्यमानं गुञ्जिका। केचिद् वटबीजम् लिखा है। गुञ्जिका= गुञ्जा=रत्ती अथवा बड़ का बीज। हमारे विचार में मान शब्द का गुञ्जा=रत्ती अर्थ मानना ही उचित है ॥१६॥

---

व्याख्या—यहां अहर्गण उदाहरण हैं—द्विरात्र से लेकर शतरात्र पर्यन्त। उनमें सन्देह होता है—क्या इनमें ज्योतिष्टोमसम्बन्धी विध्यन्त होवे अथवा द्वादशाहसम्बन्धी ? पूर्व न्याय से सौमिक विध्यन्त के प्राप्त होने पर कहते हैं—

**गणेषु द्वादशाहस्य ॥१७॥**

सूत्रार्थः—(गणेषु) अहर्गणों में (द्वादशाहस्य) द्वादशाह का विध्यन्त होवे ॥

व्याख्या—गणों में द्वादशाहसम्बन्धी विध्यन्त होवे। किस हेतु से ? चोदना के समान होने से द्वादशाहेन यजेत (=द्वादशाह से यजन करे), द्विरात्रेण यजेत (=द्विरात्र से यजन करे)। अहः शब्द भी अहोरात्र का वाचक है, रात्रि शब्द भी। यह शब्दगत लिङ्ग है

---

२. अनुपलब्धमूलम्। द्र०—द्वादशरात्रेण यजेत। तै० सं० ७।२।६।१॥
३. अनुपलब्धमूलम्। द्र०—सत्या० श्रौत १७।६।१॥

च्छब्दगतं लिङ्गम्, अर्थगतमपि गणत्वम् । गण एव सङ्घातधर्मेर्गणमनुग्रहीतुं समर्थो न एकाहः । **द्वाभ्यां लोमावद्यति, [द्वाभ्यां त्वचं, द्वाभ्यामसृक्] द्वाभ्यां मांसम्**[1] इत्येतदारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति[2] । तस्मादहर्गणानां द्वादशाहः प्रकृतिः ॥१७॥

———

**[संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम् ॥११॥]**

इह संवत्सरसत्राण्युदाहरणम्—आदित्यानामयनप्रभृतीनि । तेषु चिन्ता—किं द्वादशाहिको विध्यन्त उत गवामयनिक इति । पूर्वोक्तेन न्यायेन द्वादशाहिके प्राप्तेऽभिधीयते—

**गव्यस्य च तदादिषु ॥१८॥ (उ०)**

---

और अर्थगत गणत्व लिङ्ग है । गण ही सङ्घात धर्मों से गण को अनुगृहीत करने में समर्थ है, एकाह (=एक दिन में होनेवाला ज्योतिष्टोम) [अनुगृहीत करने में समर्थ] नहीं है । द्वाभ्यां लोमावद्यति [द्वाभ्यां त्वचं, द्वाभ्यामसृक्] द्वाभ्यां मांसम् (=दो से लोमों को काटता है, दो से त्वचा को, दो से रुधिर को, दो से मांस को) इत्यादि से आरम्भ करके द्वादशोपसत्त्व जो द्वादशाह का धर्म है उसको गवामयन में दर्शाता है । इससे अहर्गणों की द्वादशाह प्रकृति है ॥१७॥

**विवरण**—द्वादशाहिकं धर्मं गवामयने दर्शयति—इस विषय में मी० ७।४।१४ का भाष्य द्रष्टव्य है । गवामयन भी १८०+१+१८० संख्याक अहर्गण ही है । द्वादशाह के १२ दिनों के प्रत्येक दिन के कर्तव्य कर्म का चित्र मी० ८।३।३ भाष्य व्याख्या में देखें ॥१७॥

———

**व्याख्या**—यहां संवत्सरसत्र उदाहरण है—आदित्यानामयन आदि । उनमें विचार किया जाता है—क्या उनमें द्वादशाहिक विध्यन्त होवे अथवा गवामयनसम्बन्धी । पूर्वोक्त न्याय से द्वादशाहिक विध्यन्त प्राप्त होने पर कहते हैं—

**गव्यस्य च तदादिषु ॥१८॥**

**सूत्रार्थः**—(च) और (गव्यस्य) गवामयन का विध्यन्त (तदादिषु) वह संवत्सर में

---

१. द्र०—द्वाभ्यां लोमावद्यति, द्वाभ्यां त्वचं, द्वाभ्यामसृक्, द्वाभ्यां मांसम् । तै० सं० ७।४।६।१॥

२. द्र०—मी० ७।४।१४ सूत्रभाष्यम् ।

गव्यस्य च तदादिषु । गव्यमिति, गवामयनं ब्रूमः । गोसम्बन्धात् । **गावो वा एतत् सत्रमासत**[1] इति । तस्य विध्यन्तस्तदादिषु संवत्सरसत्रेषु स्यात् । कुतः ? संवत्सरसामान्यात् । **पत्नय उपगायन्ति**[2] इति च माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति । **ऋत्विज उपगायन्ति**[3] इति च सहस्रसंवत्सरे ॥१८॥

---

## [निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥१२॥]

निकाय इति सङ्घात औत्तराधर्येणावस्थित उच्यते । स येषां ते निकायिनः । यथा—साहस्राः, साद्यस्क्राः । तेषां पूर्वस्य केचिद् धर्मा आम्नाताः, उत्तरे त्वधर्मकाः । तत्र चिन्त्यते—किं ज्योतिष्टोमस्य विध्यन्त उत प्रथमस्य निकायिन

---

समाप्य गवामयन जिन संवत्सर सत्रों का आदि में है उनमें होवे । ['गव्य' शब्द के विषय में आगे विवरण में देखें ।]

व्याख्या—गव्य का तदादि में विध्यन्त होवे । 'गव्य' से गवामयन को कहते हैं, गो-सम्बन्ध से । गावो वा एतत् सत्रमासत (=गौवों ने इस सत्र को किया) । उस (=गवामयन का विध्यन्त तदादि संवत्सर सत्रों में होवे । किस हेतु से ? संवत्सर सामान्य से । पत्नय उपगायन्ति (=पत्नियां गान करती हैं) यह भी महाव्रतसम्बन्धी धर्म संवत्सर सत्र में दर्शाता है [कि उनमें गवामयनसम्बन्धी विध्यन्त होता है] । ऋत्विज उपगायन्ति (=ऋत्विक् उपगान करते हैं) यह भी संवत्सर सत्र में दर्शाता है ॥१८॥

विवरण—गव्यमिति गवामयनं ब्रूमः, गोसम्बन्धात्—'गवामयन' शब्द का अर्थ है—गौवों का अयन । अतः गो शब्द से तस्येदम् (अष्टा० ४।३।१२०) से उत्सर्ग अण् की प्राप्ति होने पर सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् (वार्तिक ४।१।८५ सूत्रस्थ) से यत् प्रत्यय होता हैं ॥१८॥

---

व्याख्या—निकाय यह जो सङ्घात औत्तराधर्यरूप (=ऊपर नीचे रूप) से अवस्थित होता है, वह कहा जाता है । वह निकाय जिनका है वे निकायी कहाते हैं । जैसे—साहस्राः,साद्यस्क्राः [ये याग विशेषों के नाम हैं] । उनमें पूर्व (=प्रथम) के कुछ धर्म पठित हैं, उत्तर धर्मरहित हैं । उनमें विचार किया जाता है—क्या [उत्तरों में] ज्योतिष्टोम का विध्यन्त होवे अथवा

---

१. द्र० गावो वै सत्रमासत । ऐ० ब्रा० ४।१७॥
२. तै० सं० ७।५।८।३॥
३. अनुपलब्धमूलम् । द्र०—सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन् । ताण्ड्य ब्रा० ५।६।१॥

इति ? अव्यक्तचोदनत्वाज्ज्योतिष्टोमस्य इति प्राप्ते उच्यते—

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥१९॥ (उ०)**

निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । कुतः ? निकायित्वसामान्यात् । साहस्राणां साहस्रसामान्यात् । साद्यस्क्राणां साद्यस्क्रसामान्यात् ।[1] एवं सर्वत्र । पूर्वस्मिंश्च साहस्रे सहस्रं दक्षिणामाम्नायोत्तरस्मिन् दर्शयति—**यावदस्य साहस्रस्योत्तरा गौः समाहिता भवति, तावदस्माल्लोकादसौ लोकः**[2] इति । तथा पूर्वस्मिन् साद्यस्क्रे—**साण्डस्त्रिसंवत्सरः सोमक्रयणः स्पर्धमानानाम्**[3] इत्याम्नायोत्तरस्मिन्नपि

---

पूर्व निकायियों का । अव्यक्त चोदना होने से ज्योतिष्टोम का विध्यन्त होवे । ऐसा प्राप्त होने पर कहते हैं—

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥१९॥**

सूत्रार्थः—(निकायिनाम्) निकायियों में (च) भी (पूर्वस्य) पूर्व=प्रथम के विध्यन्त की (उत्तरेषु) उत्तरों में (प्रवृत्तिः) प्रवृत्ति (स्यात्) होवे ।

विशेष—निकाय शब्द में उपसमाधान (औत्तराधर्य रूप से राशीकरण) अर्थ में निपूर्वक चिञ् चयने से घञ् प्रत्यय होता है और धातु के आदि चकार को ककार हो जाता है । द्र०—निवासचितिशरीरोपसमाधानेष्वादेश्च कः (अष्टा० ३।३।४१) ।

व्याख्या—निकायियों में भी पूर्व के विध्यन्त की उत्तरों में प्रवृत्ति होवे । किस हेतु से ? निकायित्व सामान्य से । साहस्रों की साहस्र सामान्य से, साद्यस्क्रों की साद्यस्क्र सामान्य से । इसी प्रकार सर्वत्र जानें । पूर्व साहस्र याग में सहस्र दक्षिणा का कथन करके उत्तर साहस्र में दर्शाता है—यावदस्य साहस्रस्योत्तरा गौः समाहिता भवति तावदस्माल्लोकादसौ लोकः (=जितनी इस साहस्र की उत्तर=ऊपर की गौ [ऊंची] स्थित होती है उतना इस लोक से वह लोक उत्तर है) । तथा पूर्व साद्यस्क्र में—साण्डस्त्रिसंवत्सरः सोमक्रयणः स्पर्धमानानाम् (=साण्ड=अण्डकोषसहित तीन संवत्सर वाला सोम क्रयण होता है स्पर्धा करने वालों का) । ऐसा कथन करके उत्तर साद्यस्क्र में भी उसे ही दर्शाता है—

---

१. 'साद्यस्क्रधर्मसामान्यात्' इति पाठान्तरम् ।

२. अनुपलब्धमूलम् । द्र०—यावद् वै सहस्रं गाव उत्तराधरा इत्याहुस्तावदस्मात् लोकात् स्वर्गो लोकः । ताण्ड्य ब्रा० १६।८।६॥

३. अनुपलब्धमूलम् । द्र०—त्रिवत्सः साण्डः सोमक्रयणः सेन्द्रत्वाय । ताण्ड्य ब्रा० १६।१३।९॥ त्रिवत्सः साण्डः सोमक्रयणः । आप० श्रौत २२।२।२५॥

देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥२॥ (उ०)

न वा देशेन नियमः स्यात्। किं तर्हि? देवतया। देवतासामान्यात्। कुतः? शब्दवती देवता। आग्नावैष्णवमग्नये शुचये, इति। इतरस्य देशस्य, अश्रुतित्वात्। देशो न श्रूयते। किं तर्हि? प्रचयाद् गम्यते[3]। किमतः? एतदतो भवति। देवताप्रत्ययः कर्मचोदनायामनन्तरत्वान्मुख्यः। इतरस्तु पौर्वापर्यापेक्षयोत्पद्यते। तस्माज्जघन्यः। मुख्यानुग्रहश्च न्याय्यः। अतः शुचिदेवत्य आग्नेयस्य विध्यन्तः। आग्नावैष्णवे चाग्नीषोमीयस्य ॥२॥

---

**देवतया वा नियम्येत शब्दवत्त्वाद् इतरस्याश्रुतित्वात् ॥२॥**

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्वपक्ष की निवृत्ति के लिये है। हविर्गण में (देवतया) देवता सामान्य से विध्यन्त (नियम्येत) नियमित होवे, (इतरस्य) स्थान सामान्य के (अश्रुतित्वाद्) अश्रुत होने से। अतः शुचिदेवताक का आग्नेय और आग्नावैष्णव का अग्नीषोमीय विध्यन्त होवे।

**व्याख्या**- देश से नियम न होवे। तो किससे नियम होवे? देवता से। देवतासामान्य से नियम होवे। किस हेतु से? देवता शब्दवती है अर्थात् शब्दरूप है—आग्नावैष्णवम् अग्नये शुचये इति। इतर देश (=स्थान) के अश्रुत होने से। देश श्रुत नहीं होता। तो कैसे जाना जाता है? प्रचय (=समुदाय) से जाना जाता है। इससे क्या होता है? इससे यह होता है कि देवता का ज्ञान कर्म चोदना के अनन्तर होने से मुख्य है। इतर (=देश का ज्ञान पौर्वापर्य की अपेक्षा से उत्पन्न होता है। इस कारण वह जघन्य (=गौण) है। मुख्य का अनुग्रह ही न्याय्य है। अतः शुचि देवतावाले कर्म में आग्नेय का विध्यन्त होगा। आग्नावैष्णव में अग्नीषोमीय का। अर्थात् एक देवतावाले कर्म में एक देवतावाले विध्यन्त का और दो देवतावाले कर्म में दो देवतावाले का ॥२॥

**विवरण—शब्दवती देवता**—मीमांसकों के मत में देवता का स्वरूप शब्दरूप ही है। विग्रहवती (=शरीरधारी देवता नहीं है इस पर आगे नवम अध्याय के प्रथमपाद के चतुर्थाधिकरण (सूत्र ६-१० भाष्य) के अन्तर्गत विस्तार से विचार किया है। **आग्नावैष्णवे चाग्नीषोमीयस्य**—पौर्णमास में अग्नीषोमीय उपांशुयाज और अग्नीषोमीय पुरोडाशयाग दो अग्नीषोमीय हैं। यहां अग्नीषोमीय पुरोडाशयाग अभिप्रेत है ॥२॥

---

३. 'प्रत्ययाद् गम्यते' इति पाठान्तरम्।

**[जनकसप्तरात्रे द्वादशाहिकानां सप्तानामह्नां क्रमेण धर्मातिदेशाधिकरणम् ॥२॥]**

जनकसप्तरात्रे श्रूयते—'चत्वारि त्रिवृन्त्यहानि भवन्ति'[1] इति। तथाऽन्यत्र श्रूयते—'नव त्रिवृन्त्यहानि भवन्ति'[2] इति। तत्र सन्देहः—किं पार्ष्ठिकस्य प्रथमस्यायमभ्यास उत नानाह्नां द्वादशाहिकानां स्तोमविधिरिति ? किं प्राप्तम् ?

---

**व्याख्या**—जनक सप्तरात्र नामक याग में सुना जाता है—चत्वारि त्रिवृन्त्यहानि भवन्ति (=चार त्रिवृत्वाले दिन होते हैं), तथा अन्यत्र सुना जाता है—नव त्रिवृन्त्यहानि भवन्ति (=नौ त्रिवृत्वाले दिन होते हैं) उनमें सन्देह होता है—क्या पृष्ठ स्तोमवाले प्रथम दिन के कार्य का यह अभ्यास (=पुनः पुनः ४ दिन तक, तथा ९ दिन तक प्रथम दिन के कार्य को ही करना) अथवा भिन्न-भिन्न दिनोंवाले द्वादशाहिक स्तोमों की विधि है ? क्या प्राप्त होता है ?

**विवरण**—जनकसप्तरात्रे ताण्ड्य ब्राह्मण में भिन्न-भिन्न कामनाओं के लिये अनेक प्रकार के 'सप्तरात्र' याग कहे हैं। जनक सप्तरात्र अन्नाद्य कामनावाले के लिये कहा है (तां० २२।९)। इस नाम में 'जनक' शब्द 'वैदेह जनक' व्यक्तिवाचक नहीं है, अपितु आगे (२२।९।४-५) इसको पुरुषजनक कहा है (द्र०—सायणभाष्य)। अतः यहां जनक शब्द 'पुरुषजनक' का एक देश है। इसका अर्थ है—'उत्पन्न करनेवाला'। नव त्रिवृन्त्यहानि भवन्ति—यह वचन 'सवितुः ककुप्' संज्ञक एकोनपञ्चाशद्रात्र (=४९ दिनों वाला) अतिरात्र कर्मविषयक है (द्र०—ताण्ड्य ब्रा० २४।१५।१, सा० भा०)। किं पार्ष्ठिकस्य प्रथमस्यायमभ्यासः—द्वादशाह के पृष्ठ्य षडह के त्रिवृत् पृष्ठ स्तोमवाले प्रथम दिन के धर्मों का चार दिनों में अथवा ९ दिनों में पुनः पुनः प्रवर्तन होवे अथवा द्वादशाह के भिन्न-भिन्न त्रिवृत् पञ्चदश प्रभृति नानाविध पृष्ठ स्तोमों के धर्म क्रमशः अगले दिनों में प्रवृत्त होवें। द्वादशाह के नाना पृष्ठ स्तोम इस प्रकार हैं—

**विवरण**—द्वादशाह के बारह दिनों की संस्था स्तोम आदि इस प्रकार हैं—

| दिवस | सोम संस्था | स्तोम | ग्रह-अग्रता | साम |
|---|---|---|---|---|
| प्रथम (प्रायणीय) | अतिरात्र | त्रिवृत् आदि | ऐन्द्रवायव | रथन्तर |
| द्वितीय (पृष्ठ्य षडह) | अग्निष्टोम | त्रिवृत् (९) | ,, | ,, |
| तृतीय ,, ,, | उक्थ्य | पञ्चदश (१५) | शुक्र | बृहत् |
| चतुर्थ ,, ,, | ,, | सप्तदश (१७) | आग्रयण | वैरूप |

---

१. ताण्ड्य ब्रा० २२।९।१॥ अत्र 'भवन्ति' पदं नास्ति।

२. ताण्ड्य ब्रा० २४।१५।१॥ अत्र 'भवन्ति' पदं नास्ति।

## गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् ॥३॥ (पू०)

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् । गणचोदनायामेवंविधायां यस्य लिङ्गं पार्ष्ठिकस्य प्रथमस्याह्नस्त्रिवृत्त्वं, तस्यैवाऽऽवृत्तिः प्रतीयेत ।

| | | | | |
|---|---|---|---|---|
| पञ्चम (पृष्ठ्य षडह) | षोडशी | एकविंश (२१) | आग्रयण | वैराज |
| षष्ठ ,, ,, | उक्थ्य | त्रिणव (२७) | ऐन्द्रवायव | शाक्वर |
| सप्तम ,, ,, | ,, | त्रयस्त्रिंश (३३) | शुक्र | रैवत |
| अष्टम (छन्दोम) | ,, | चतुर्विंश (२४) | ,, | रथन्तर |
| नवम ,, | ,, | चतुश्चत्वारिंश (४४) | आग्रयण | बृहत्-रथन्तर |
| दशम ,, | अग्निष्टोम या अतिरात्र | अष्टाचत्वारिंश (४८) | ऐन्द्रवायव | बृहत् |
| एकादश (अविवाक्य) | अग्निष्टोम | चतुर्विंश (२४) | ,, | रथन्तर |
| द्वादश (उदयनीय) | अतिरात्र | त्रिवृत् आदि | ,, | ,, |

यह चित्र से स्पष्ट है कि **पार्ष्ठिकस्य प्रथमस्याभ्यासः** से द्वादशाह के जिस पृष्ठ्य त्रिवृत् स्तोमवाले प्रथम दिन का निर्देश है वह द्वादशाह का द्वितीय दिन है । द्वितीय से सप्तम तक पृष्ठ्य षडह संज्ञक दिवस होते हैं । इसी प्रकार अन्यत्र भी समझें ।

यह चित्र ग्रहाग्रता को छोड़कर आपस्तम्ब श्रौतसूत्र के अनुसार है । इनके क्रमशः विधान स्थल इस प्रकार हैं—(१) आप० श्रौत २१।५।१६; (२) २१।६।१०; (३) २१।६।१३; (४) २१।६।१६; (५) २१।७।१; (६) २१।७।८; (७) २१।७।१२; (८-९-१०) २१।८।११-१२; (११) २१।९।१; (१२) २१।१३।१॥ पूज्य गुरुवर्य श्री चिन्न स्वामीजी शास्त्री ने यज्ञतत्त्वप्रकाश के पृष्ठ १२७ पर ग्रहाग्रता सहित द्वादशाह के प्रति दिन के कर्मों का चित्र दिया है उसमें नवम दिन में केवल बृहत् साम का, दशम दिन रथन्तर साम का, एकादश दिन बृहत्साम का निर्देश है । पूज्य गुरुवर का आपस्तम्ब सूत्र था । अतः आपस्तम्बसूत्र से ९, १०, ११ दिनों में सामों के नामों में जो भेद है वह सम्भवतः मुद्रणजन्य हो ।

### गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् ॥३॥

**सूत्रार्थः**—(गणचोदनायाम्) अहर्गणों के विधायक वाक्य में (यस्य) जिस त्रिवृत् पृष्ठ स्तोमवाले प्रथम दिन का (लिङ्गम्) रूप श्रुत है (तदावृत्तिम्) उसकी आवृत्ति (प्रतीयेत) जाने (आग्नेयवत्) आग्नेय विध्यन्त के समान (द्र०—पूर्व सूत्र) ।

**व्याख्या**—अहर्गणों की चोदना में जिसका लिङ्ग है उसकी आवृत्ति जाने आग्नेय के समान । इस प्रकार की गण चोदना में जिसका लिङ्ग पृष्ठ संज्ञक प्रथम दिन का त्रिवृत्त्व [देखा जाता है] उसकी आवृत्ति [उत्तर दिनों में] जानी जावे, चोदना के सामान्य से आग्नेय

चोदनासामान्यात् । आग्नेयवत् । तद्यथा **अग्नये पावकाय, अग्नये शुचये,** इति देवतैक्याच्चोदनासामान्यादाग्नेयस्य विध्यन्ताभ्यासः । एवमिहापि ।।३।।

**नानाहानि वा संघातत्वात् प्रवृत्तलिङ्गेन चोदनात् ।।४।। (उ०)**

नानाहानि वा द्वादशाहिकानि प्रवर्तेरन्, न पार्ष्ठिकं प्रथममहः । कस्मात् ? सङ्घातत्वात् । सङ्घात एष उच्यते, चत्वारि त्रिवृन्त्यहानीति । पृथक्त्वनिवेशिनी हि चत्वारीति संख्या, पृथक्त्वेनाह्नां भवतीति । सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि । तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यते । न तु त्रिवृन्ति बहून्यहान्यनूद्य तत्र चतुःसंख्या विधीयते ।।४।।

**तथा चान्यार्थदर्शनम् ।।५।।**

---

के समान । जैसे—अग्नये पावकाय अग्नये शुचये में देवता के ऐक्य से चोदना सामान्य से आग्नेय विध्यन्त का अभ्यास होता है । इसी प्रकार यहां भी अभ्यास होवे ।।३।।

**नानाहानि वा सङ्घातत्वात् प्रवृत्तलिङ्गेन चोदनात् ।।४।।**

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है । (नानाहानि) द्वादशाह के भिन्न-भिन्न दिनों के धर्म प्रवृत्त होवें (सङ्घातत्वात्) चार वा नौ संख्या द्वारा सङ्घात विहित होने से । (प्रवृत्तलिङ्गेन) सप्तरात्र अथवा एकोनपञ्चाशद्रात्र कर्म की प्रवृत्तिवाले त्रिवृत्त्व लिङ्ग से (चोदनात्) विधि का निर्देश होने से वह उत्तर अहों के नाना स्तोमों का बाधक नहीं है ।

**व्याख्या**—द्वादशाह के नाना दिन प्रवृत्त होवें, पृष्ठ संज्ञक प्रथम दिन [का अभ्यास न होवे] । किस हेतु से ? सङ्घातरूप से । चत्वारि त्रिवृन्त्यहानि भवन्ति में सङ्घात ही यहां कहा जाता है । 'चत्वारि' यह संख्या पृथक्त्व में ही निविष्ट (=रहने वाली) है । दिनों के पृथक्त्व से [चार संख्या उपपन्न] होती है । सप्तरात्र में चोदना से प्रवृत्त द्वादशाह के चार नाना दिन हैं । उनका अनुवाद करके त्रिवृत्त्व का विधान किया जा सकता है, न कि बहुत से त्रिवृत् दिनों का विधान करके चार संख्या का विधान किया जाता है ।।४।।

**विवरण**—भट्टकुमारिल ने भाष्यकार के व्याख्यान में दोष दर्शाकर अन्यथा रूप से सूत्र का व्याख्यान किया है (द्र०—इस सूत्र की टुप्टीका)। उसका विस्तार भय से हम उल्लेख नहीं करते ।।४।।

**तथा च अन्यार्थदर्शनम् ।।५।।**

**सूत्रार्थः**—(तथा) उक्त तात्पर्य का बोध (अन्यार्थदर्शनम्) अन्यार्थ भिन्न धर्मवाले दिनों का दर्शन=लिङ्ग (च) भी है ।

चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि' इति । येषामग्निष्टोमः प्रथमः, इतरेऽनग्निष्टोमाः, त एवमुक्ते प्रतीयते, न ये सर्वेऽग्निष्टोमाः । यथा, अयोमुखं पिण्डच्छेदनमित्युक्ते न सर्वायसं प्रतीयते । यदि च त्रिवृतोऽभ्यासः स्यात्, सर्वेऽग्निष्टोमा भवेयुः । अग्निष्टोमो ह्यसौ । तस्माद् द्वादशाहिकानां चोदकप्राप्तानामह्नां त्रिवृत्ता विधीयते । एवं नव त्रिवृन्त्यहानि भवन्तीति ।।५।।

———

[षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ।।३।।]

क्वचित् कर्मविशेषे श्रूयते । षडहा भवन्ति, चत्वारो भवन्ति,' पञ्चाहा

---

व्याख्या—चत्वारि त्रिवृन्त्यग्निष्टोममुखानि (=चार त्रिवृत् स्तोमवाले अग्निष्टोममुखवाले=अग्निष्टोम प्राथम्यवाले हैं) । जिनमें अग्निष्टोम प्रथम है इतर [तीन दिन] अनग्निष्टोम (=अग्निष्टोम से भिन्न) हैं, वे इस प्रकार कहने पर प्रतीत होता है, ये सब (=४ दिन) अग्निष्टोम वाले नहीं हैं । जैसे 'लोह मुखवाला पिण्ड का छेदक है' ऐसा कहने पर सारा पिण्डछेदक लोहे का नहीं जाना जाता । यदि त्रिवृत् का [उत्तर दिनों में] अभ्यास होवे तो सारे अग्निष्टोम होवें । यह [त्रिवृत्] अग्निष्टोम है । इससे द्वादशाहिक के चोदकप्राप्त दिनों की त्रिवृत्ता विहित है । इसी प्रकार नव त्रिवृन्त्यहानि भवन्ति में भी समझना चाहिये ।।५।।

विवरण – 'जनक सप्तरात्र' की क्लृप्ति इस प्रकार जाननी चाहिये प्रथम दिन—त्रिवृद् अग्निष्टोम संस्था, २-३-४ दिन—उक्थ्य संस्था, ५—विश्वजित्, ६ महाव्रतम्, ७—अग्निष्टोम अतिरात्र (द्र०—सा० भाष्य तां० ब्रा० २२।६।१) । सवितु ककुभ् संज्ञक एकोनपञ्चाशद्रात्रं (४६) की क्लृप्ति—चार नवाह (४×=३६) त्रिवृद् आदि स्तोमवाले । आदि के षडहों में प्रथम अग्निष्टोम संस्थावाला, २-६ पांच अह उक्थ्य संस्थावाले, अवशिष्ट तीन दिनों आदि (७वां) अन्तिम (९वां) अग्निष्टोम संस्थावाले, मध्यम (८वां) उक्थ्य संस्थावाला । इस प्रकार नवाह के चतुष्टय होने पर ३६ दिन पूरे होते हैं । दशाह (१० दिन), महाव्रत (१) अन्त अतिरात्र (२) [३६+१०+१+२=४६] मिलकर एकोनपञ्चाशद् अह की पूर्ति होती है (द्र०—सा० भाष्य तां० ब्रा० २५।१५।१) ।।५।।

———

व्याख्या—कहीं कर्म विशेष सुना जाता है—षडहा भवन्ति, चत्वारो भवन्ति,

---

१. ताण्ड्य ब्रा० २२।६।१।।
२. तै० सं० ७।४।६।२ (षट्त्रिंशद्रात्रे) ।

भवन्ति[1]। तत्र सन्देहः। किं द्वादशाहिकानामह्नां प्रवृत्तिः, उत षडहस्येति? किं प्राप्तम्?

## कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥६॥

कालाभ्यासेऽपि बादरिः। षडहकालाभ्यासेऽप्येतस्मिन् श्रूयमाणे बादरिचार्यो द्वादशाहिकानामह्नां[2] प्रवृत्तिं मन्यते स्म। कुतः? कर्मभेदात्। षड्हशब्देनात्राहर्मितानि षट् सौत्यानि कर्माण्युच्यन्ते। तेषां च षट्कानां भेदो गम्यते। **चत्वारः षडहा** इति पृथक्त्वनिवेशात् संख्यायाः यद्येकस्यैव कर्मषट्कस्य पार्ष्ठिकस्याऽऽभिप्लविकस्य वाऽभ्यासः कल्प्येत, ततश्चतुःषडहा इति स्यात्। अथ पुनः, **चत्वारः षडहा** इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते, साऽहःसङ्घातचोदना प्रकृतिलिङ्गत्वाद् द्वादशाहिकीमहःप्रवृत्तिं गृह्णाति तस्मान्नानाह्नां द्वादशाहिकानां प्रवृत्तिः ॥६॥

---

पञ्चाहा भवन्ति (=षडह होते हैं, चार होते हैं, पञ्चाह होते हैं)। इनमें सन्देह है कि द्वादशाह के दिनों की प्रवृत्ति होती है, अथवा षडह की? क्या प्राप्त होता है?

### कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥६॥

**सूत्रार्थः**—(कालाभ्यासे) षडहकाल के अभ्यास में (अपि) भी (बादरि.) बादरि आचार्य द्वादशाहिक दिनों की प्रवृत्ति मानता है (कर्मभेदात्) कर्म के भेद से अर्थात् षडह शब्द से यहां दिन से नापे गये छः सौत्य कर्म कहे जाते हैं।

**व्याख्या**—काल के अभ्यास में भी बादरि, षडहकाल के अभ्यास में भी इस श्रूयमाण कर्म में बादरि आचार्य द्वादशाहिक दिवसों की प्रवृत्ति मानते हैं। किस हेतु से? कर्मभेद से। षडह शब्द से यह दिन से नापे गये छः सुत्या में होने वाले कर्म कहे जाते हैं। और उनका षट् संख्यामित [सौत्य कर्मों] का भेद जाना जाता है। चत्वारः षडहाः से संख्या के पृथक्त्व निवेशिनी होने से यदि एक ही छः कर्म परिमाणवाले पृष्ठ्य संज्ञक कर्मों का अथवा अभिप्लव-संज्ञक कर्मों के अभ्यास की कल्पना की जाये तो चार षडह होवें। और चत्वारः षडहाः ऐसा कहने पर चौबीस अहः प्रतीत होते हैं। यह अहःसङ्घात की चोदना प्रकृति लिङ्गत्व से द्वादशाहिकी अहःप्रवृत्ति को ग्रहण करती है इससे द्वादशाहिक के नाना दिनों की प्रवृत्ति जाननी चाहिये ॥६॥

**विवरण**—प्रकृत सूत्र का भाष्य अस्पष्ट सा है। अन्य ग्रन्थों के साहाय्य से हमने जो अभिप्राय समझा है वह इस प्रकार है—

चत्वारः षडहः में 'षडह' शब्द विचारणीय है। यदि द्वादशाहिक के पृष्ठ्य संज्ञक षडह

---

१. तै० सं० ७।४।५।२ (त्रयस्त्रिंशद्रात्रे)। २. 'नानाह्नां'—पाठान्तरम्।

## तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् ॥७॥ (सि०)

तदावृत्तिं, पार्ष्ठिकस्यैव प्रज्ञातस्य षडहस्याऽऽवृत्तिं जैमिनिराचार्यो मेने। कुतः? अह्नामप्रत्यक्षसंख्यत्वात्। चतुर्विंशतिरह्नामप्रत्यक्षा संख्याऽनुमानाद् गम्यते। तस्याश्च षडहचतुष्टयेनैवानुमानम्। तेन पूर्वं तावत् षडहचतुष्टयमेव प्रत्येति। ततसमाहृत्य[1] चतुर्विंशतिसंख्याम्। यथा, पूर्वं धूमं प्रतिपद्यते, पश्चादग्निम्। यच्च धूमप्रत्ययेनैव कृतार्थो भवति नासावग्निप्रत्ययमाद्रियते। इहापि षडहप्रत्ययादेव तत्प्रवृत्तिः प्रसज्यते। तथा च कृतार्थः, किं चतुर्विंशतिसंख्यया प्रतीतया[2] करिष्यति? तस्मात् षडहाभ्यासः।

---

लिये जावें तो एक षडह के पश्चात् क्रमशः उनकी आवृत्ति होगी। और यदि षडह में अहःशब्द को अहःपरिमित सौत्य (=सुत्या सम्बन्धी) कर्मों का वाचक मानें तो छः सुत्याओं के साथ चतुष्ट्व संख्या का सम्बन्ध होने से २४ सुत्यादि वस होंगे। अतः द्वादशाहान्तर्गत दशरात्र की २४ संख्या पूर्त्यर्थ अभ्यास से प्रवृत्ति माननी होगी। दशाह की दो आवृत्तियों से २० सुत्याएं सम्पन्न होंगीं। तृतीय बारी में उसी दशाह की चार सुत्याएं जोड़ने पर २४ सुत्या दिवस उपपन्न होंगे। इस प्रकार द्वादशाह के नाना सुत्या दिवस अर्थ जानना चाहिये। [पञ्चाहा भवन्ति के सम्बन्ध में यहां कुछ नहीं कहा।] ॥६॥

### तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् ॥७॥

सूत्रार्थः—(तु) 'तु' शब्द पूर्व पक्ष की निवृत्ति के लिये है। (तदावृत्तिं) पृष्ठ्य षडह की आवृत्ति को ही (जैमिनिः) जैमिनि आचार्य मानते हैं (अह्नाम्) दिनों की (अप्रत्यक्षसंख्यत्वात्) २४ संख्या के अप्रत्यक्ष होने से। अर्थात् दिनों की २५ संख्या अनुमान से प्रतीत होती है।

व्याख्या—उसकी आवृत्ति=जाने गये पृष्ठ्य षडह की ही आवृत्ति को जैमिनि आचार्य मानते हैं। किस हेतु से? दिनों की संख्या के अप्रत्यक्ष होने से। दिनों की चौबीस संख्या अप्रत्यक्ष है अनुमान से जानी जाती है और उस संख्या का षडह के चतुष्टय से ही अनुमान होता है। इससे पूर्व षडह चतुष्टय को जनाता है, उस (=षडह चतुष्टय) को इकट्ठा करके २४ संख्या को जनाता है। जैसे पूर्व धूएं को प्राप्त होता है (=देखता है) पीछे अग्नि को प्राप्त होता है अर्थात् अग्नि की प्रतीति होती है। और जो धूएं के ज्ञान से ही कृतार्थ हो जाता है, आगे जानना नहीं चाहता वह अग्नि के ज्ञान का आदर नहीं करता (=अग्नि के ज्ञान के प्रति प्रवृत्त नहीं होता है)। इसी प्रकार यहां भी षडह के ज्ञान से ही उसकी प्रवृत्ति प्राप्त होती है उससे वह कृतार्थ होता है (=उसका प्रयोजन सिद्ध हो जाता है) तो वह प्रतीत हुई २४ संख्या से क्या करेगा? इसलिये षडह का अभ्यास होता है।

---

१. 'परतः समाहृत्य'—पाठान्तरम्। २. 'प्रतीतयाऽपि'—पाठान्तरम्।

अथ यदुक्तं, पृथक्त्वनिवेशिनी संख्याऽऽवृत्तौ बाध्येतेति। तत्र ब्रूमः। षडह इति प्रज्ञातः षडहः संनिहितो गृह्यते। तस्य चतुःसंख्यासम्बन्धः साक्षान्नास्तीत्यावृत्त्या भविष्यति। यथा, उपसदां प्रयाजानुयाजानां च। यस्यापि, चतुर्विंशतिरात्रश्चत्वारः षडहा इत्येवं चोद्यते, तस्यापि दशरात्रे प्रवर्तमानं आवृत्त्यैव संख्यापूरणम्। भिन्नानां षडहानामभावात्। यश्चोभयोर्दोषो नासावेकं पक्षं निवर्तयति ॥७॥

———

और जो यह कहा—पृथक्त्व में रहने वाली संख्या आवृत्ति में बाधित होवे। इस विषय में कहते हैं—षडह से जाना गया षडह [बुद्धि में] सन्निहित हुआ गृहीत होता है। उसका चतुःसंख्या से सम्बन्ध साक्षात् नहीं है इसलिये आवृत्ति से [चतुःसंख्या का सम्बन्ध] होगा जैसे—उपसदों के प्रयाज और अनुयाजों की [संख्या की पूर्ति आवृत्ति से होती है]। और जिसके यहां चतुर्विंशतिरात्रश्चत्वारः षडहाः (=चतुर्विंशतिरात्र चार षडह होते हैं) इस प्रकार विधान किया जाता है उसके भी दशरात्र के प्रवर्तमान होने पर [षडह की] आवृत्ति से ही संख्या का पूरण होता है। अन्य षडहों के अभाव होने से। इसलिये जो दोष दोनों पक्षों में है वह एक पक्ष को निवृत्त नहीं करता ॥७॥

विवरण—यथा उपसदां प्रयाजानुयाजानां च—इसका तात्पर्य है कि प्रकृतियाग अग्निष्टोम में ३ उपसद् कहे गये हैं और अग्निचयन में ६ उपसदों का विधान है। इसी प्रकार प्रकृतियाग दर्शपूर्णमास में ५ प्रयाज और ३ अनुयाज होते हैं परन्तु चातुर्मास्य में ९ प्रयाजों और ९ अनुयाजों का तथा पशुयाग में ११ प्रयाजों और ११ अनुयाजों का विधान है। यहां सर्वत्र बढ़ी हुई संख्या की पूर्ति आवृत्ति से होती है वैसे ही प्रकृत में षडहों में भी जाननी चाहिये।

उपसदों की संख्या वृद्धि के विषय में मीमांसा ५।३। अधि० २ (सूत्र ३) में विचार किया है। उसमें कहा है कि दण्डकलितवत् तीन उपसदों का एकवार प्रयोग करके पुनः तीन की आवृत्ति नहीं करनी चाहिये अपितु स्वस्थान में वृद्धि होनी चाहिये अर्थात् प्रथम उपसद् दो बार करके द्वितीय उपसद् दो बार, तदनन्तर तृतीय उपसद् दो बार, इस प्रकार छः संख्या की पूर्ति करनी चाहिये। यह स्वस्थान में वृद्धि इसलिये कही गई है कि उपसदों का क्रम नियत है—प्रथमां कृत्वा मध्यमा कर्तव्या तत उत्तमा।

प्रयाजों और अनुयाजों में चातुर्मास्य में विहित ९ संख्या एवं पशुयाग में विहित ११ संख्या में अभ्यास से संख्या पूर्ति करनी चाहिये। यह मीमांसा ५।३। अधि० १ (सूत्र १) में कहा है। परन्तु कैसे करनी चाहिये यह वहां स्पष्ट नहीं कहा है। संकर्ष काण्ड (२।३।१७-२०) में एकादश संख्या की पूर्ति इस प्रकार दर्शाई है—३ अनुयाजों में प्रथम बर्हि और द्वितीय नराशंस की ४-४ बार आवृत्ति (४+४=८) तथा तृतीय स्विष्टकृत् अनुयाज की २ बार

[शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ।।४।।]

इह संस्थागणा उदाहरणम्—अग्निष्टोमः पञ्चोक्थ्यः[1], शताग्निष्टोमं भवति,[2] शतातिरात्रं भवति[3] इत्येवमादयः। अत्र चिन्त्यते—किं ज्योतिष्टोमस्यायमभ्यास उतैवंसंख्यानां संस्थाविशिष्टानामह्नां वाद इति ? किं प्राप्तम् ।

संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ।।८।। (पू०)

---

आवृत्ति, परन्तु दशम बर्हि के विधान के अनुसार ९वां स्विष्टकृत् करके १०वां बर्हि, पुनः ११वां स्विष्टकृत् होवे (द्र०—संकर्ष ३।२।१९ की व्याख्या) । प्रयाजों में ३ प्रयाज क्रमशः और चतुर्थ और पञ्चम की चार चार बार आवृत्ति होती है (द्र०—संकर्ष ३।२।२०) ।।७।।

———

व्याख्या—यहां संस्थागण उदाहरण हैं—अग्निष्टोमः पञ्चोक्थ्यः (=अग्निष्टोम पांच उक्थ्य), शताग्निष्टोमं भवति (१०० अग्निष्टोम होते हैं), शतातिरात्रं भवति (=१०० अतिरात्र होते हैं)इत्यादि । इस विषय में विचार किया जाता है—क्या ज्योतिष्टोम (=अग्निष्टोम) का यह अभ्यास है अथवा इस संख्यावाले संस्था विशिष्ट दिनों का वाद है ? क्या प्राप्त होता है ?

विवरण—ज्योतिष्टोमस्यायमभ्यासः—ज्योतिष्टोम सोम की सब संस्थाओं का नाम है ।

यहां पर विचार यह किया जाता है कि पञ्चोक्थ्यः शताग्निष्टोमं शतातिरात्रम् विधियों में संस्थाविशेष जो उक्थ्य अग्निष्टोम अतिरात्र है उनका अभ्यास होवे अथवा द्वादशाह अन्तर्गत जो तत्तत् संस्था (जिन स्तोत्रों से कर्म की समाप्ति हुई है) विशिष्ट दिनों के अभ्यास का कथन है । संस्था का अभ्यास होवे यह पूर्व पक्ष है और द्वादशाह अन्तर्गत जो तत्तत् संस्थाविशिष्ट दिन हैं उनका अभ्यास होता है । संस्थाविशेष उक्थ्यादि के अभ्यास में दीक्षा प्रभृति सब कर्मों का अभ्यास होगा । संस्थाविशिष्ट दिन के अभ्यास केवल सुत्यादिन का अभ्यास होगा यह दोनों में भेद है ।

संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ।।८।।

सूत्रार्थः—(संस्थागणेषु) अग्निष्टोम आदि संस्थाओं के समुदाय में (तदभ्यासः) उसी प्रकृत अग्निष्टोम का अभ्यास (प्रतीयेत) जानें। (कृतलक्षणग्रहणात्) किया गया है लक्षण जिनका ऐसे अग्निष्टोम उक्थ्य आदि का ग्रहण होने से । संस्थाओं का नामकरण उनके अन्तिम

---

१. अनुपलब्धमूलम् ।

२. अनुपलब्धमूलम् । द्र०—शताग्निष्टोमं सत्रमुपेयुः । शत० ११।५।५।२, ४।।

३. अनुपलब्धमूलम् । द्र०—शतातिरात्रं सत्रमुपेयुः । शत० ११।५।५।५, ६।।

संस्थागणेषु तदभ्यासः प्रतीयेत। तस्यैव प्रकृतस्य ज्योतिष्टोमस्यायमभ्यासः। कुतः ? कृतलक्षणग्रहणात्। तस्यैतत् कृतं लक्षणम्। अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति। तत्संयोगेनेताः संस्था उत्पन्नाः। स ताभिः शक्यते लक्षयितुम्। तं च लक्षयित्वा संख्यां केवलां विधास्यति। नानाह्नां तु वादे संस्था संख्या चोभयं विधीयते—उक्थ्यसंस्था[1] भवन्ति, ते च पञ्च भवन्तीति। तथा वाक्यं भिद्यते। तस्माज्ज्योतिष्टोमाभ्यासः ॥८॥

## अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्याद् अभिधानस्य तन्निमित्तत्वात् ॥९॥ (सि०)

नैतदेवं, ज्योतिष्टोमाभ्यास इति। कथं तर्हि ? प्रकृतिस्तद्विशिष्टा स्यात्। द्वादशाहिकान्यहानि संस्थाविशिष्टानि स्युः। कस्मात् ? अधिकारात्। तान्यत्र

---

स्तोत्र के आधार पर किया गया है अर्थात् विशिष्ट स्तोत्रों के संयोग से ही संस्थाओं का नामकरण है। उन्हीं संस्थाविशेषों का ग्रहण शताग्निष्टोमं भवति आदि वचनों में ग्रहण है।

व्याख्या—संस्था के गणों में उसका अभ्यास जाना जाये। उसी प्रकृत अग्निष्टोम का यह अभ्यास है। किस हेतु से ? कृत लक्षण (=कृतनामधेय) के ग्रहण से। उसका यह लक्षण किया है—अग्निष्टोम, उक्थ्य, षोडशी, अतिरात्र। उसके संयोग से ये संस्था उत्पन्न हुई है अर्थात् जो जो स्तोत्र जिस जिस कर्म के अन्त में होते हैं उसी पर उस संस्था का नामकरण हुआ है। वह उन संस्थाओं से लक्षित किया जा सकता है। और उसको लक्षित करके केवल संख्या का विधान करेगा। नाना दिनों के वाद में यदि संस्था और संख्या दोनों का विधान किया जायेगा—उक्थ्य संस्था होती हैं और वे पांच होती हैं। ऐसा विधान करने पर वाक्यभेद होवे। इसलिये ज्योतिष्टोम का अभ्यास होता है ॥८॥

**अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्याद अभिधानस्य तन्निमित्तत्वात् ॥९॥**

सूत्रार्थः—(वा) 'वा' शब्द पूर्व उक्त पक्ष की निवृत्त्यर्थ है। (अधिकारात्) अधिकार से (प्रकृतिः) प्रकृतिरूप द्वादशाह के दिन (तद्विशिष्टा) तत्तत् संस्थाविशिष्ट (स्यात्) होवे। (अभिधानस्य) अग्निष्टोम उक्थ्य आदि नामों के (तन्निमित्तत्वात्) उस सस्था=जिस स्तोत्र से कर्म की समाप्ति होती है, के कारण होने से।

व्याख्या—ऐसा नहीं है कि ज्योतिष्टोम का अभ्यास है। तो कैसे है (=किसका अभ्यास है) ? प्रकृति तद्विशिष्ट होवे। द्वादशाह के दिन संस्थाविशिष्ट [अभ्यस्त] होवें। किस हेतु से ? अधिकार से। वे(=द्वादशाहिक तत्तत् संस्था से विशिष्ट दिन) चोदक से अधिकृत

---

१. 'उक्थ्याः संस्थाः' पाठान्तरम्।

चोदकेनाधिकृतानि । एवं चोदकानुग्रहो भविष्यति । ननु प्रत्यक्षविहितो ज्योतिष्टोमोऽग्निष्टोमादिभिः शब्दैः । नेत्याह । कथम् ? अभिधानस्य तन्निमित्तत्वात् । अग्निष्टोमाद्यभिधानं संस्थानिमित्तं, न ज्योतिष्टोमाभिधायकम्[1] । तत्तत्संस्थं[2] क्रतु वदितु शक्नोति, न ज्योतिष्टोममेव । यत्तु अनेकार्थत्वमिति[3] । नानेकार्थत्वं[4] भविष्यति । गणचोदनया प्राप्तानामह्नां पञ्चानां संस्थामात्रं विधायिष्यते । शताग्निष्टोममित्यपि समास उभयविशेषणविशिष्टं गणमाह । स एक एवार्थः । यथा—लोहितोष्णीषा ऋत्विजः प्रचरन्ति[5] इति । पृथक्त्वनिवेशिनी चैवं संख्याऽनुगृहीता भविष्यति । तस्माद् द्वादशाहिकानां नानाह्नां वादः ।।६।।

———

हैं । इस प्रकार चोदक का अनुग्रह होगा । (आक्षेप) प्रत्यक्ष विहित ज्योतिष्टोम है अग्निष्टोम आदि शब्दों के द्वारा । (समाधान) नहीं है (=अग्निष्टोम आदि शब्दों से ज्योतिष्टोम अभिहित नहीं है)। कैसे ? अभिधान के तन्निमित्त होने से । अग्निष्टोमादि नाम संस्थानिमित्तक हैं, ज्योतिष्टोम के वाचक नहीं हैं । उस उस संस्था (=समाप्ति) वाले क्रतु को कह सकता है, केवल ज्योतिष्टोम को ही नहीं कहता । और जो यह कहा कि [ऐसा मानने पर] अनेकार्थत्व (=द्वादशाहिक के दिनों के पक्ष में संख्या और संस्था दोनों को कहना) होगा । अनेकार्थत्व नहीं होगा । गणचोदना से प्राप्त पांच दिनों का संस्थामात्र का विधान करेगा । शताग्निष्टोमम् यह भी उभय विशेषण (=संख्या और संस्था) विशिष्ट गण को कहता है । और वह एक ही अर्थ है । जैसे लोहितोष्णीषा ऋत्विजः प्रचरन्ति (=लाल पगड़ीवाले ऋत्विक् कर्म करते हैं) में [लोहितोष्णीष विशिष्ट ऋत्विक् का विधान है] । ऐसा होने पर पृथक्त्व में रहने वाली संख्या अनुगृहीत होगी । इससे द्वादशाहिक के नाना (=तत्तत् संस्थावाले) दिनों का कथन है ।।६।।

विवरण- तान्यत्र चोदकेनाधिकृतानि—द्रष्टव्य—गणेषु द्वादशाहस्य (मी० ८।१।१७) अर्थात् गणों की चोदना में द्वादशाहिक विध्यन्त होता है । अर्थात् गणों की द्वादशाह प्रकृति होती है ।।६।।

———

१. 'ज्योतिष्टोमवाचकम्' पाठान्तरम् । २. 'तत्संस्थं' पाठान्तरम् ।
३. 'अनेकार्थमिति' पाठान्तरम् । ४. 'नानेकार्थम्' पाठान्तरम् ।
५. अनुपलब्धमूलम् । द्र०—लोहितोष्णीषा लोहितवाससे निवीता ऋत्विजः प्रचरन्ति । षड्विंश ब्रा० ३।८।।.........लोहितवसना......... । आप० श्रौत २२।४।२३।।

[शतोक्थ्यादौ ज्यौतिष्टोमिकोक्थ्यादिस्तोत्रानुष्ठानाधिकरणम् ॥५॥]

**शतोक्थ्यं भवति,[1] शतातिरात्रं भवति[2]** इति श्रूयते। तत्र द्वादशाहिकान्यहानि प्रवर्तन्ते। तानि च प्रायेणोक्थ्यसंस्थानि। द्वावग्निष्टोमौ। **शतोक्थ्यं भवति** इत्युक्तं, अग्निष्टोमयोरुक्थ्यस्तोत्रोपचयः प्राप्तः। **शतातिरात्रं भवति** इति सर्वेषु रात्रिपर्यायोपचयः। तत्र चिन्त्यते। किं द्वादशाहादुपचयः कर्तव्य उत ज्योतिष्टोमादिति ? किं प्राप्तम् ?

**गणादुपचयस्तत्प्रकृतित्वात् ॥१०॥ (पू०)**

---

व्याख्या—शतोक्थ्यं भवति (=१०० उक्थ्य होते हैं), शतातिरात्रं भवति (=१०० अतिरात्र होते हैं) ऐसा सुना जाता है। इनमें द्वादशाहिक अहःप्रवृत्त होते हैं। और वे प्रायः उक्थ्य संस्थावाले हैं, दो अग्निष्टोम हैं। शतोक्थ्यं भवति ऐसा कहा है [इससे] दो अग्निष्टोमों में उक्थ्य स्तोत्र का उपचय प्राप्त होता है। शतातिरात्रं भवति में सब (अग्निष्टोमों और उक्थ्यों) में रात्रिपर्याय का उपचय प्राप्त होता है। उसमें विचार किया जाता है - क्या द्वादशाह से उपचय करना चाहिये अथवा ज्योतिष्टोम से ? क्या प्राप्त होता है ?

विवरण—प्रायेणोक्थ्यसंस्थानि, द्वावग्निष्टोमौ—द्वादशाह के प्रायणीय और उदयनीय दिनों को छोड़कर शेष मध्य के दिनों में विभिन्न संस्थाएँ इस प्रकार हैं—दूसरे और दसवें दिन अग्निष्टोम (२), तृतीय, चतुर्थ, षष्ठ, सप्तम, अष्टम, नवम दिन उक्थ्य (७). पञ्चम दिन षोडशी (१) (द्रष्टव्य पूर्वत्र मी० ८।३।३ भाष्य व्याख्या, पृष्ठ २२४८)। पञ्चम दिन १ षोडशी होने से भाष्यकार ने **प्रायेणोक्थ्यसंस्थानि** में प्रायः शब्द का प्रयोग किया है। **अग्निष्टोमयोरुक्थ्यस्तोत्रोपचयः**—दश दिनों में जो दो अग्निष्टोम संस्थाएं हैं उनमें उक्थ्य स्तोत्र का उपचय (=वृद्धि=वर्धन) प्राप्त होता है। इसी प्रकार **शतातिरात्रं** में सब (=अग्निष्टोम और उक्थ्यों) में रात्रिपर्याय का उपचय होगा। **ज्योतिष्टोमात्**—ज्योतिष्टोम से सभी अग्निष्टोमादि संस्थाओं का ग्रहण होता है। अतः शत अतिरात्र में ज्योतिष्टोम की अग्निष्टोमादि सभी संस्थाओं में रात्रि पर्याय का उपचय प्राप्त होता है।

**गणादुपचयस्तत्प्रकृतित्वात् ॥१०॥**

**सूत्रार्थः**—(गणात्) गण=द्वादशाह के अग्निष्टोमादि से (उपचयः) उक्थ्य और रात्रिपर्याय के धर्मों का उपचय होगा। (तत्प्रकृतित्वात्) अहर्गणों की द्वादशाह प्रकृति होने से।

---

१. अनुपलब्धमूलम्। द्र०—'शतोक्थेन' शब्द शत० ११।५।५।२,४॥

२. अनुपलब्धमूलम्। द्र०—शतातिरात्रं सत्रमुपेयुः। शत० ११।५।५।६॥

गणादुपचयः । कुतः ? तत्प्रकृतित्वात् । द्वादशाहप्रकृतय एतेऽहर्गणाः । तेषु द्वादशाहिको विध्यन्तः प्राप्यते । यदि द्वादशाहादुपचयः,एवं चोदकानुग्रहो भविष्यति। तस्माद् गणादुपचयः ॥१०॥

## एकाहाद्वा तेषां समत्वात् स्यात् ॥११॥

एकाहाद्वा ज्योतिष्टोमादुपचयो, न द्वादशाहात् । कस्मात् ? तेषां समत्वात् । द्वादशाहिकानामह्नामितरैर्वैकृतैः समत्वं भवति । तान्यप्यन्यतः संस्थामाकाङ्क्षन्ति, इमान्यपि । न च भिक्षुका भिक्षुकादाकाङ्क्षन्ति, सत्यन्यस्मिन् प्रसवसमर्थेऽभिक्षुके । किमेतदुक्तं भवति । द्वादशाहे संस्थास्तोत्राण्यनाम्नातानीत्यतो यत्राऽऽम्नातानि तत आकाङ्क्षन्ति । वैकृतेष्वहःसु तानि नाऽऽम्नातानीति । तस्माद् वैकृतान्यहानि यत्र विहितानि तत एवाऽऽकाङ्क्षितुमर्हन्ति । ज्योतिष्टोमे च तान्याम्नातानि । तस्मा-

---

**व्याख्या**—गण से उपचय होगा । किस हेतु से ? तत् प्रकृति होने से । ये [शतोक्थ्य शतातिरात्र रूप अहर्गणों की] द्वादशाह प्रकृतिवाले हैं । उनमें द्वादशाहिक विध्यन्त होगा । इस कारण गण (=द्वादशाह) से उपचय होगा ॥१०॥

### एकाहाद्वा तेषां समत्वात् स्यात् ॥११॥

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है । (तेषाम्)उनके(= द्वादशाहिक अग्निष्टोमादि के और शतोक्थ्यादि) के(समत्वात्)समान होने से(एकाहात्) एकाह रूप जो ज्योतिष्टोम की संस्थाएं हैं उनसे उपचय (स्यात्) होवे । अर्थात् द्वादशाहिक अग्निष्टोमादि और शतोक्थ्यादि दोनों अपने सस्था धर्मों की आकाङ्क्षा रखते हैं अतः दोनों के समान आकाङ्क्षावाले होने जैसे द्वादशाहिक एकाह ज्योतिष्टोम एकाहरूप प्रकृति से धर्मों का ग्रहण करते हैं वैसे ही ये शतोक्थ्यादि भी ज्योतिष्टोम से धर्मों का ग्रहण करेंगे ।

**व्याख्या**—अथवा एकाह ज्योतिष्टोम से उपचय होवे द्वादशाह से उपचय न होवे । किस हेतु से ? उनके समान होने से । द्वादशाहिक अग्निष्टोमादि दिनों के इतर वैकृत कर्मों से समानता है । वे (=द्वादशाहिक दिन) भी अन्य स्थान से अर्थात् प्रकृतिभूत ज्योतिष्टोम रूप एकाह से संस्था की आकाङ्क्षा करते हैं, ये शतोक्थ्य आदि भी । भिक्षुक भिक्षुक से आकाङ्क्षा (=याचना) नहीं करते । अन्य प्रसव समर्थ (=वितरण समर्थ) अभिक्षुक के होने पर अर्थात् ज्योतिष्टोम एकाह के विद्यमान होने पर । इससे क्या कहा जाता है ? द्वादशाह में संस्था के स्तोत्र आम्नात (=पठित) नहीं हैं अतः जहां संस्था के स्तोत्र पठित हैं उससे आकाङ्क्षा करते हैं । वैकृत दिनों में वे संस्था स्तोत्र आम्नात नहीं हैं । इससे वैकृत दिन जहां संस्था स्तोत्र विहित हैं उससे ही आकाङ्क्षा कर सकते हैं । ज्योतिष्टोम में वे संस्था स्तोत्र

ज्ज्योतिष्टोमादुपचयः ॥११॥

---

[बृहस्पतिसवादौ दाशतयीभ्य उत्पन्नगायत्रीणां समानयनाधिकरणम् ॥६॥]

उपचयश्चिन्तितः। अपचय इदानीं चिन्त्यते। इदं श्रूयते—वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत[1] इति। तत्रेदं समाम्नातं—गायत्रमेतदहर्भवति[2] इति। अत्र विचार्यते—किं प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा गायत्रं तदहः कर्तव्यम् उतोत्पत्तिगायत्रीणां दाशतयीभ्य आगमं कृत्वेति ? अत्र सूत्रेणैवोपक्रमः—

**गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात् संख्यात्वाद् अग्निष्टोमवद्व्यतिरेकात् तदाख्यत्वम् ॥१२॥ (पू०)**

---

आम्नात हैं। इससे ज्योतिष्टोम से उपचय होगा ॥११॥

---

व्याख्या—उपचय (=वृद्धि=बढ़ाना) का विचार किया। अब उपचय(=ह्रास=न्यून करना) का विचार किया जाता है। यह सुना जाता है - वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत (=वाजपेय से यजन करके बृहस्पतिसवन यजन करे)। वहां यह आम्नात है—गायत्रमेतदहर्भवति (=यह दिन गायत्र=गायत्री छन्दवाला होता है)। यहां विचार किया जाता है—क्या प्रकृतिगत त्रिष्टुप् जगती छन्दों के अक्षरों का लोप करके उस दिन का गायत्री छन्दवाला करना चाहिये अथवा उत्पत्ति रूप गायत्री (=स्वभावतः गायत्रछन्द) रूप से पठित ऋचाओं का दाशतयियों (=१० मण्डल वाली ऋग्वेद की शाखाओं) से आगम करके [गायत्र अह सम्पन्न करना चाहिये]। इसमें सूत्र से ही आरम्भ करते हैं—

विवरण—प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा—प्रकृति में पठित त्रिष्टुप् के ३६ अक्षरों में से १२अक्षरों का लोप और जगती के ४८ अक्षरों में से २४ का लोप करके उक्त छन्दों को २४ अक्षरों वाली गायत्री का रूप दिया जाये [जगती के ४८ अक्षरों में २४ का लोप बिना किये दो गायत्री भी बनाई जा सकती हैं]।

**गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकाराद् संख्यात्वाद् अग्निष्टोमवद्व्यतिरेकात् तदाख्यत्वम् ॥१२॥**

---

१. अनुपलब्धमूलम्। आप० श्रौत १८।७।१७ सूत्रे वाजपेयानन्तरं बृहस्पतिर्विधीयते।

२. शत० १२।२।४।७॥ एतद् ससमहः।

गायत्रीषु प्राकृतीनामवच्छेदः—गायत्रीषु श्रूयमाणासु गायत्रमेतदहर्भवतीति, प्राकृतीनां त्रिष्टुब्जगतीनामवच्छेदोऽक्षरावलोपः कर्तव्यः। कुतः? प्रकृत्यधिकारात्। चोदकेनात्र प्राकृत्यस्त्रिष्टुब्जगत्यः प्राप्ता अधिकृता विद्यन्ते। यद्यन्यानामृचामागमः क्रियेत, प्राकृतः प्रत्ययो बाध्येत।

ननु प्रत्यक्षश्रुता गायत्र्यः ताभिश्चोदकप्राप्ता इतरा बाधितव्याः। नेत्याह। कस्मात्? संख्यात्वात्। अयं गायत्रीशब्दः संख्यावाचकः। कथं ज्ञायते? अव्यतिरेकात् चतुर्विंशतिसंख्यामेष न व्यभिचरति। न क्वचित् चतुर्विंशतिसंख्यया विना दृष्टः। चतुर्विंशतिसंख्याहीनासु त्रिष्टुब्जगतीषु न कदाचिद् भवति। तस्मात् संख्याशब्दोऽयम्। संख्याशब्दश्चेदक्षरावलोपः कर्तव्यः। अग्निष्टोमवत्। यथा—शताग्निष्टोमं भवति[1] इत्युक्ते द्वादशाहिकानामह्नामुक्थ्यावलोपः क्रियते। एवमिहापि ॥१२॥

---

सूत्रार्थः—(गायत्रीषु) यह दिन गायत्रीछन्दवाला होता है रूप से गायत्रियों के सुने जाने पर (प्राकृतीनाम्) प्रकृतिगत त्रिष्टुप् और जगती छन्द के अक्षरों का (अवच्छेदः) लोप करना चाहिये (प्रकृत्यधिकारात्) चोदकवचन से प्रकृतिगत त्रिष्टुप् जगती छन्दों के अविकृत होने से। (संख्यात्वात्) गायत्री के २४ संख्या के (अव्यतिरेकात्) व्यतिरेक के अभाव=अव्यभिचार से (तदाख्यत्वम्) उस संज्ञावाचक अर्थात् गायत्री शब्द के २४ संख्यावाची होने से। (अग्निष्टोमवत्) शताग्निष्टोमं भवति में जैसे द्वादशाहिक उक्थ्य दिनों का लोप किया है, तद्वत्।

व्याख्या—गायत्रियों में प्रकृत छन्दों का अवच्छेद (=ह्रास=लोप) करना चाहिये। गायत्रमेतदहर्भवति में गायत्रियों के श्रूयमाण होने पर प्रकृति से प्राप्त त्रिष्टुप् और जगती छन्दों में [गायत्री के सम्पादन के लिये] अक्षरों का लोप करना चाहिये। किस हेतु से? प्रकृति के अविकृत होने से [प्रकृतिवद् विकृतिः कर्तव्या इस]चोदक वचन से यहां प्रकृतिगत त्रिष्टुप् और जगती [छन्दस्क ऋचाएं] प्राप्त हुई अधिकृत हैं। यदि अन्य गायत्रीछन्दस्क ऋचओं को आरम्भ करें तो प्राकृत प्रत्यय बाधित होवे।

(आक्षेप) प्रत्यक्ष श्रुत गायत्री ऋचाएं हैं उनसे चोदक प्राप्त अन्य [त्रिष्टुप् जगती ऋचाएं] बाधित होवें। (समाधान) ऐसा नहीं होवे। किस हेतु से? संख्यात्व के कारण। यह गायत्री शब्द संख्यावाचक है। कैसे जाना जाता है? अव्यतिरेक से। यह गायत्री शब्द चतुर्विंशति संख्या को व्यभिचरित नहीं करता (=नहीं छोड़ता)। कहीं भी चतुर्विंशति संख्या के विना [यह गायत्री शब्द] नहीं देखा गया। चतुर्विंशति संख्या से हीन (=रहित) त्रिष्टुप् जगती में [यह गायत्री शब्द] कभी नहीं होता है। इससे यह गायत्री संख्या शब्द है। यदि संख्या शब्द होवे तो [त्रिष्टुप् जगती के] अक्षरों का लोप करना होगा। अग्निष्टोम के समान। जैसे शताग्निष्टोमं भवति ऐसा कहने पर द्वादशाहिक उक्थ्य दिनों का लोप करते हैं। इसी प्रकार यहां भी जानना चाहिये॥१२॥

---

१. अनुपलब्धमूलम्। द्र०—शताग्निष्टोमं सत्रमुपेयुः। शत० ११।५।५।२,४।

## तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥१३॥

तन्नित्यवत् संख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, पृथक्सतीषु पृथग्भूतासु गायत्रीभ्यो जगतीषु, अगायत्रीषु तद्वचनं भवति, गायत्रीवचनं भवति—ये हि द्वे गायत्र्यौ, सैका जगती[1] इति। यदि संख्यायां गायत्रीशब्दस्ततो जगत्यां द्वे चतुर्विंशतिसंख्ये इत्येतद्वचनमुपपद्यते, अथ ऋचि ततो द्वे ऋचौ जगत्यां न स्त इत्येतद्वचनमनुपपन्नं स्यात्। तस्मादपि संख्यायां गायत्रीशब्दः। तथेदमपरं च दर्शनम्। तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोतीति ॥१३॥

## न विंशतौ दशेति चेत् ॥१४॥

अथ, कश्चिद् ब्रूयात्, न विंशतौ दशसंख्याऽस्ति। न संख्या संख्यान्तरे वर्तते। गुणो हि संख्या। न च गुणा गुणेषु वर्तन्ते। एवमष्टाचत्वारिंशत् संख्या चतुर्विंशति-

---

### तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥१३॥

सूत्रार्थः—(तन्नित्यवत्) उस नित्यवत् संख्यामात्र को कहते गायत्री शब्द को मानकर (च) भी (पृथक्सतीषु) गायत्री से भिन्न जगतियों में अर्थात् अगायत्रियों में (तद्वचनम्) गायत्री शब्द का वचन होता है। यथा—ये हि द्वे गायत्र्यौ सैका जगती अर्थात् जो दो गायत्रिया हैं वह एक जगती हैं अर्थात् ४८ अक्षर वाली जगती में २४·२४ अक्षरों की दो गायत्रियां मानी जाती हैं। इससे भी गायत्री शब्द २४ अक्षरों का ही वाचक है।

व्याख्या—गायत्री शब्द को नित्यवत् २४ संख्यामात्र का वाचक मानकर गायत्रियों से पथक भूत जगतियों में अर्थात् अगायत्रियों में उस गायत्री का वचन होता है—ये हि द्वे गायत्र्या सका जगती (=जो दो गायत्रियां हैं, वह एक जगती है)। यदि २४ संख्या अर्थ में गायत्री शब्द होवे तो जगती में दो २४ संख्यावाले यह वचन उपपन्न होवे। इससे भी २४ संख्या में गायत्री शब्द है। तथा यह दूसरा दर्शन है—तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति (=तीन अनुष्टुभों [३२×३=९६] को चार गायत्रियां [२४×४=९६] बनाता है ॥१३॥

### न विंशतौ दशेति चेत् ॥१४॥

सूत्रार्थः—(विंशतौ) २० संख्या में (दश) १० संख्या (न इति चेत्) नहीं है ऐसा कहो तो!

व्याख्या—यदि कोई कहे कि विंशति (२०) में दश संख्या नहीं है। संख्या अन्य संख्या में वर्तमान नहीं होती। संख्या गुण है। गुण गुण में वर्तमान नहीं रहता। इस प्रकार अड़तालीस संख्या चौबीस संख्या में नहीं है। इससे गायत्री शब्द के संख्या अर्थ में होने पर भी

---

१. अनुपलब्धमूलम्। द्र०—ये हि द्वे गायत्र्यौ सा जगती। मैत्रा० स० ३।२।२॥

संख्यायां नास्ति । तस्मात् संख्यार्थेऽपि गायत्रीशब्दे, एका जगती, द्वे गायत्र्यौ, इत्येतदनुपपन्नमेव । यश्चोभयो दोषो नासावेकस्य वाच्यः ॥१४॥

ऐकसंख्यमेव स्यात् ॥१५॥

अत्रोच्यते । न ब्रूमः संख्यायां संख्या वर्तत इति । किं तर्हि ? अष्टाचत्वारिंशतसंख्यापरिच्छिन्नेष्वक्षरेष्ववयवभूते द्वे चतुर्विंशतिसंख्ये, न तु द्वे ऋचौ इति । न च संख्या संख्यान्तरं निवर्तयति । यदि निवर्तयेदैकसंख्यमेव स्यात् । यस्य दश गावस्तस्य द्वौ पञ्चकौ गवामित्येतद्वचनं न स्यात् । भवति च तत् । तस्मान्न संख्या संख्यान्तरं निवर्तयति ।

[चतुर्दशपञ्चदशसूत्रयोरपरा व्याख्या]

एवं वा—

न विंशतौ दशेति चेत् । यद्यपि संख्यायां गायत्रीशब्दः, एवमपि नाक्षराव-

---

एक जगती दो गायत्रियां हैं यह कथन उपपन्न ही नहीं होता । और जो दोनों का दोष होता है वह एक का वाच्य नहीं होता ॥१४॥

विवरण—न गुणा गुणेषु वर्तन्ते—गुण का जो लक्षण वैशेषिक दर्शन में किया है उसमें गुण को द्रव्याश्रयी और अगुणवान् कहा है—द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमपेक्ष इति गुणलक्षणम् (१।३।१६) । अगुणवान् का अर्थ है जिसमें गुणान्तर न रहता हो ॥१४॥

ऐकसंख्यमेव स्यात् ॥१५॥

सूत्रार्थः—यदि संख्या संख्यान्तर की निवर्तिका होवे तो (ऐकसंख्यम्) एक संख्या (एव) ही (स्यात्) होवे । यतः दश गायें देवदत्त की हैं । ऐसे कथन के स्थान में पांच पांच गायों के दो समुदाय हैं ऐसा भी कथन होता है ।

व्याख्या—यहां कहते हैं—हम यह नहीं कहते कि संख्या में दूसरी संख्या है । तो क्या कहते हैं ? अड़तालीस संख्या से परिच्छिन्न (=नपे हुए) अक्षरों में अवयवभूत दो चौबीस संख्यावाले हैं. न कि दो ऋचाएं हैं । संख्या संख्यान्तर को निवर्तित नहीं करती । यदि निवृत्ति करे तो ऐकसंख्य ही होवे । जिसकी दश गायें हैं, उसकी द्वौ पञ्चकौ गवाम् (गायों के दो पञ्चक=पांच पांच के समुदाय हैं) यह कथन न होवे । परन्तु ऐसा कथन होता है । इससे संख्या संख्यान्तर को निवर्तित नहीं करती ।

[चतुर्दशपञ्चदशसूत्रयोरपरा व्याख्या]

एवं वा—अथवा इस प्रकार से [सूत्र व्याख्या समझें] ।

न विंशतौ दशेति चेत् (=विंशति संख्या में दश संख्या नहीं है, ऐसा कहो तो) । यद्यपि [२४] संख्या में गायत्री शब्द है, इस प्रकार भी अक्षरों का लोप नहीं करना चाहिये ।

लोपः कर्तव्यः । किं कारणम् ? विंशतौ दश विद्यन्ते । किमतः ? इदं तावदतः । येन विंशतिरुपात्ताः, उपात्तास्तेन दश भवन्ति । एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः प्रयुक्तास्तेन तदन्तर्गता गायत्र्यो भवन्ति । तस्मादविकारेण प्रयोगः । एवं चोदकानुग्रहश्च भवति । गायत्रं चाहः कृतं भवति ।

ऐकसंख्यमेव स्यात् । अत्राऽऽह । जगत्यां त्रिष्टुभि चोपात्तायां न गायत्र्य उपात्ता भवन्ति । कथम् ? साधनं परिच्छिन्दती संख्या कर्मणि अङ्गी भवति । न जगत्याः, त्रिष्टुभो वाऽवयवः साधनम् । किं तर्हि ? त्रिष्टुब्जगत्यः । अथोच्येत, गायत्रमेतदहर्भवतीति वचनादवयव एवात्र साधनमिति । तथा सत्यक्षरावलोप एव प्राप्नोति । उत्तरस्यावयवस्यानङ्गत्वात्। न चानङ्गेऽनुपादीयमाने चोदको बाध्यते। तस्माद् यदुक्तं, यद्यपि संख्यायां गायत्रीशब्दः, एवमप्यविकारेण प्रयोग इति ।

एतदयुक्तम् । दर्शयति च—नोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति। यदयम् एका च दश च शतं च सहस्रं च परार्धं चेति सर्वसंख्या अनुक्रामति । यदि चोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्ति

---

क्या कारण है ? बीस संख्या में दश संख्या हैं । इससे क्या होगा ? इससे यह होगा—जिसने बीस संख्या का उपादान (=ग्रहण) किया है उससे दश संख्या गृहीत होती हैं । इसी प्रकार जिसने त्रिष्टुपों और जगतियों का प्रयोग किया है, उसके द्वारा उनके अन्तर्गत गायत्रियां भी प्रयुक्त हुई हैं । इसलिये विना विकार(=लोप) के प्रयोग होगा । इस प्रकार चोदक का अनुग्रह भी होता है और दिन भी गायत्री वाला उपपन्न हो जाता है ।

ऐकसंख्यमेव स्यात् (=ऐकसंख्य ही होवे) । इस विषय में कहते हैं—जगती और त्रिष्टुप् के उपादान करने पर गायत्रियां गृहीत नहीं होती हैं । कैसे ? साधन के परिच्छिन्न(=नापती हुई) संख्या कर्म में अङ्गी होती है । जगती और त्रिष्टुप् का अवयव साधन नहीं है । तो क्या साधन है ? त्रिष्टुप् और जगतियां । यदि यह कहो कि गायत्रमेतदहर्भवति इस वचन से अवयव ही यहां साधन है । ऐसा होने पर अक्षरों का लोप ही प्राप्त होता है, उत्तर अवयव के अनङ्गत्व होने से । और अनङ्ग के उपादान न करने पर चोदक बाधित नहीं होता है । इसलिये जो कहा है—यद्यपि संख्या में गायत्री शब्द है अर्थात् २४ संख्या का वाचक गायत्री शब्द है, उस प्रकार भी विना विकार के प्रयोग हो जायेगा ।

यह युक्त नहीं है—यह दर्शाता है कि उत्तर संख्या के उपादान करने पर पूर्व संख्याएं उपात्त नहीं होती हैं । जो यह एका च दश च शतं च सहस्रं च परार्धं च के रूप में सब संख्याओं का अनुक्रमण (=कथन)होता है । यदि उत्तर संख्या के ग्रहण करने पर पूर्व संख्याएं गृहीत होवें तो ऐकसंख्य ही (=एक ही संख्या) होवे । एक ही परार्ध संख्या होवे । क्योंकि

ऐकसंख्यमेव स्यात् । एकैव परार्धसंख्या भवेत् । सा हि सर्वाभ्य उत्तरा । यतस्त्वेकाद्या अप्यनुक्रान्ताः, अतो विज्ञायते, नोत्तरस्यां संख्यायामुपात्तायां पूर्वा संख्या उपात्ता भवन्तीति ॥१५॥

**गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥१६॥ (उ०)**

नैतदेवं[1] संख्यायां गायत्रीशब्द इति । कथं तर्हि ? गुणाद् द्रव्यशब्दः स्यात् । चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकः । कस्मात् ? असर्वविषयत्वात् । यदि संख्याशब्दः स्यात्, सर्वस्मिश्चतुर्विंशतिसंख्यासंख्येये[2] वर्तेत गोयूथादौ । न च वर्तते । तस्मान्न संख्याशब्दः ॥१६॥

---

वही सबके अन्त में है । जो एक आदि संख्याओं का कथन किया है इससे जाना जाता है कि उत्तर संख्या के उपादान करने पर पूर्व संख्याएं गृहीत नहीं होती हैं ॥१५॥

विवरण—एतदयुक्तम् इससे १४-१५ सूत्रों की जो दूसरी शाखा दर्शाई है उसकी अयुक्तता दर्शाई है । इस प्रकार ऐकसंख्यमेव स्यात् का सूत्रार्थ होगा—उत्तर संख्या के उपादान करने पर पूर्व संख्या गृहीत नहीं होती है । ऐसा मानने पर केवल अन्तिम परार्ध एक ही संख्या होवे एक दश शत आदि का निर्देश न होवे ॥१५॥

**गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥१६॥**

सूत्रार्थः—(वा) 'वा' शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है । (गुणात्) गुण = २४ संख्या के सम्बन्ध से (द्रव्यशब्दः) २४ अक्षर युक्त ऋक् द्रव्य का वाचक गायत्री शब्द (स्यात्) होवे । (असर्वविषयत्वात्) गायत्री शब्द के सभी २४ संख्या युक्त द्रव्यों का विषय न होने से । अर्थात् गायत्री शब्द यदि २४ संख्या का वाचक होवे तो जो जो पदार्थ २४ संख्या युक्त होवे उन सब में गायत्री शब्द वर्तमान होवे, परन्तु ऐसा नहीं है अतः गायत्री शब्द २४ अक्षर युक्त द्रव्य विशेष ऋचा का ही वाचक है ।

व्याख्या—ऐसा नहीं है कि गायत्री शब्द संख्या का वाचक है । तो कैसा है ? गुण से द्रव्य का वाचक होवे । २४ अक्षर युक्त [ऋक्] द्रव्य का वाचक है । किस हेतु से ? असर्वविषयक होने से । यदि गायत्री शब्द २४ संख्या शब्द होवे तो सभी २४ संख्या से संख्येय (=गिने जानेवाले) गोयूथ (= गौवों का समुदाय) में वर्तमान होवे । [किन्तु गोयूथ आदि में गायत्री शब्द] वर्तमान (= प्रयुक्त) नहीं होता है । इस कारण गायत्री संख्या शब्द नहीं है ॥१६॥

---

१. 'न चैतदेवं' इति पाठान्तरम् ।

२. 'चतुर्विंशतिसंख्येये' इति पाठान्तरम् ।

## गोत्ववच्च समन्वयः ॥१७॥

यथा, गौरिति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव समन्वयो, नान्यत्रेति तद्वचन एव गोशब्दो विज्ञायते। एवमयमपि ऋग्वचन एव विज्ञातुं न्याय्यः ॥१७॥

## संख्यायाश्च शब्दत्वात् ॥१८॥

चतुर्विंशतिसंख्यावाचकः शब्दोऽस्ति, चतुर्विंशतिरिति। नास्यान्तरेण गायत्रीशब्देनार्थः। संज्ञाया व्यवहारार्थत्वादेकेन व्यवहारसिद्धेः ॥१८॥

## इतरस्याश्रुतित्वाच्च ॥१९॥

---

### गोत्ववच्च समन्वयः ॥१७॥

सूत्रार्थः—(गोत्ववत्) गोत्व के समान (समन्वयः) सास्नादि द्रव्य में ही समन्वय होने से (च) भी। अर्थात् जैसे गो शब्द गच्छतीति गौः व्युत्पत्ति से सब गतिमान् अर्थ में प्रयुक्त न होकर गोत्व जाति के योग से सास्नादियुक्त पशु में ही प्रयुक्त होता है इसी प्रकार गायत्री शब्द सब २४ संख्यायुक्त पदार्थों के साथ समन्वित न होकर केवल ऋक् को ही कहेगा।

व्याख्या—जैसे गौ शब्द का गमन निमित्त होने पर सामान्य गतिवाले द्रव्य के अभिधायकत्व की प्राप्ति होने पर भी सास्नादि से युक्त प्राणी में ही समन्वय होता है उसी प्रकार यहां भी गायत्री शब्द २४ संख्यावाचक होने पर भी ऋग्वाचक ही जानना न्याय्य है ॥१७॥

### संख्यायाश्च शब्दत्वात् ॥१८॥

सूत्रार्थः—(संख्यायाः) २४ संख्या का (शब्दवत्वात्) शब्दवान् अर्थात् चतुर्विंशति शब्द के विद्यमान होने से (च) भी गायत्री शब्द २४ संख्या का वाचक नहीं है।

व्याख्या—चतुर्विंशति संख्या का वाचक 'चतुर्विंशति' शब्द है। उस संख्या को कहने के लिये अन्य गायत्री शब्द से प्रयोजन नहीं है, संज्ञा के व्यवहारार्थ होने से एक संज्ञा से ही व्यवहार की सिद्धि होने से ॥१८॥

विवरण—एकेन व्यवहारसिद्धेः—इस विषय में अन्यायश्चानेकशब्दत्वम् (मी० १।३। ३६) सूत्र द्रष्टव्य है। इस सूत्र द्वारा एक अर्थ के लिये अनेक शब्दों का प्रयोग अन्याय्य माना है। इस पर हमारा विवरण देखें (भाग १, पृष्ठ २६४, २६५) ॥१८॥

### इतरस्याश्रुतित्वाच्च ॥१९॥

सूत्रार्थः—(इतरस्य) अन्य ऋक् द्रव्य के (अश्रुतित्वात्) अशब्द=शब्द से व्यवहृत न होने से (च) भी गायत्री शब्द २४ संख्या का वाचक नहीं है।

इतरस्य ऋग्द्रव्यस्याश्रुतित्वात् । अशब्दत्वादित्यर्थः । तस्यापि व्यवहारार्थेन संज्ञाशब्देन प्रयोजनम्[1]। तत्रायं गायत्रीशब्दोऽर्थवान् भवति । संख्यायां निष्प्रयोजनः। तस्मादपि ऋक्शब्दो न्याय्यः । अतो गायत्रीणामृचामागमः कर्तव्य इति ॥१९॥

द्रव्यान्तरेऽनिवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥२०॥

यदुपवर्णितम्, अग्निष्टोमवदिति । तत्र ब्रूमः—अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चिन्निवेशो नास्ति । यथा गायत्रीशब्द ऋग्द्रव्ये । अयं हि केवलाग्निष्टोमान्ततां ब्रूते । न चोक्थ्यलोपमन्तरेण द्वादशाहिकानामह्नामग्निष्टोमान्तता भवतीत्यवश्यकार्य उक्थ्यलोपः । अयं पुनर्गायत्रीशब्द ऋग्द्रव्यस्य वाचक इत्युक्तम् । न

---

व्याख्या—इतर ऋक् द्रव्य के अश्रुति होने से अर्थात् अशब्दत्व (=शब्द रहित) होने से । उस (=२४ अक्षरयुक्त ऋक् द्रव्य) को भी व्यवहार के लिये संज्ञा शब्द से प्रयोजन (=आवश्यकता) है । वहां यह गायत्री शब्द अर्थवान् होता है । संख्या में निष्प्रयोजन है । इससे भी गायत्री का ऋक् शब्द न्याय्य है । इसलिये गायत्री छन्दवाली ऋचाओं का आगम करना चाहिये ॥१९॥

द्रव्यान्तरेऽनिवेशाद् उक्थ्यलोपैर्विशिष्टं स्यात् ॥२०॥

सूत्रार्थः—अग्निष्टोम के (द्रव्यान्तरे) अन्य द्रव्य में (अनिवेशात्) निवेश न होने से अर्थात् द्रव्यान्तर को न कहने से शताग्निष्टोम में अग्निष्टोम शब्द (उक्थ्यलोपैः) उक्थ्य संस्थाओं के लोप से (विशिष्टम्) विशिष्ट (स्यात्) होवे । [यह १२ में सूत्र में अग्निष्टोमवत् दृष्टान्त के विषय में है ।]

विशेष—भाष्य की मुद्रित पुस्तकों में तथा कुतूहलवृत्ति में द्रव्यान्तरे निवेशात् पाठ मिलता है । सुबोधिनी वृत्ति में द्रव्यान्तरेऽनिवेशादुक्थ्यलोपे विशिष्टं स्यात् पाठ है । हमें अनिवेशात् पाठ युक्त प्रतीत होता है ।

व्याख्या—जो कहा है—अग्निष्टोम के समान [जैसे शताग्निष्टोम में द्वादशाहिक उक्थ्यों का लोप किया जाता है तद्वत् त्रिष्टुप् जगती के अक्षरों का लोप हो जायेगा] । उस विषय में कहते हैं—अग्निष्टोम शब्द का किसी [उक्थ्यादि] में निवेश नहीं है । जैसे गायत्री शब्द का ऋक् द्रव्य में है । यह (=अग्निष्टोम शब्द केवल अग्निष्टोम की अन्तता(=समाप्ति में होना) को कहता है । उक्थ्य लोप के विना द्वादशाहिक दिनों की अग्निष्टोमान्तता नहीं होती अतः उक्थ्य लोप अवश्य किया जाने योग्य है । यह गायत्री शब्द ऋग्द्रव्य का वाचक है,

---

१. 'कार्यं प्रयोजनम्' इति पाठान्तरम् ।

चाक्षरावलोपेन तदृग्द्रव्यं प्राप्यते। तस्माद् विषमोऽयमुपन्यास इति ॥२०॥

अशास्त्रलक्षणत्वाच्च ॥२१॥

अशास्त्रलक्षणानि चोक्थस्तोत्राणि शताग्निष्टोमे, तानि शास्त्रलक्षणयाऽग्निष्टोमान्ततया बाध्यन्ते। इह पुनर्विपरीतं, शास्त्रलक्षणा गायत्र्यः, अनुमानिक्यस्त्रिष्टुब्जगत्यः। ता न शक्नुवन्ति गायत्रीं बाधितुम् ॥२१॥

उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् ॥२२॥

अथ यदुक्तं, संख्यायां गायत्रीशब्दो दृष्टः। ये हि द्वे गायत्र्यौ, सैका जग-

---

यह कह चुके। [त्रिष्टुप् और जगती के] अक्षरों के लोप से वह [गायत्र संज्ञक] ऋक् द्रव्य प्राप्त नहीं होता। इसलिये यह [अग्निष्टोम का] निर्देश विषम है ॥२०॥

विवरण—अग्निष्टोम उक्थ्य आदि स्तोत्र विशेषों के नाम हैं। ये स्तोत्र जिन ज्योतिष्टोमों के अन्त में होते हैं उनकी वह संज्ञा होती है। न चोक्थ्यलोपान्तरेण······अग्निष्टोमान्तता भवति-उक्थ्य संस्था में अग्निष्टोम स्तोत्र के अनन्तर उक्थ्य स्तोत्र होता है। अतः द्वादशाहिक उक्थ्यों के उक्थ्य के लोप के विना उन दिनों की अग्निष्टोमान्तता नहीं होती ॥२०॥

अशास्त्रलक्षणत्वाच्च ॥२१॥

सूत्रार्थः—(अशास्त्रलक्षणत्वात्) शास्त्रलक्षण से रहित होने के कारण (च) भी शताग्निष्टोम में उक्थ्यों का लोप होता है।

व्याख्या—शताग्निष्टोम में उक्थ्य स्तोत्र शास्त्रलक्षण से विपरीत हैं। वे शास्त्रलक्षण अग्निष्टोमान्तता से बांधे जाते हैं। यहां पुनः विपरीत है। गायत्रियां शास्त्रलक्षण वाली है (गायत्रमेतदहर्भवति वचन से प्राप्त हैं)। त्रिष्टुप् जगतियां [प्रकृतिवद् अतिदेश से प्राप्त होने के कारण] आनुमानिक हैं। वे [आनुमानिक त्रिष्टुप् जगतियां] गायत्री को नहीं बांध सकतीं ॥२१॥

उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् ॥२२॥

सूत्रार्थः—गायत्री के (उत्पत्तिनामधेयत्वात्) औत्पत्तिक [नित्य] ऋचा का नामधेय होने से (भक्त्या) जगती के अवयव २४ अक्षरों में परिमाण सामान्य भक्ति=लक्षणा से (पृथक्सतीषु) पृथक् रूप से वर्तमान जगतियों में 'ये हि द्वे गायत्र्यौ सैका जगती' प्रयोग (स्यात्) होवे।

व्याख्या—जो यह कहा कि [२४] संख्या में गायत्री शब्द देखा गया है—ये हि द्वे

तीति । तस्य कः परिहारः ? उच्यते—औत्पत्तिकमेतदृचो नामधेयमित्युक्तम् । अत उत्पत्तिनामधेयत्वाद् योऽयं जगत्यवयवे चतुर्विंशत्यक्षरे पदसंचये प्रयोगः, स भक्त्या[1] विज्ञेयः । न ह्येकस्य शब्दस्यानेकार्थता सत्यां गतौ न्याय्या[2] । कया पुनर्भक्त्या ? परिमाणसामान्यात् । यत्परिमाणं द्वयोर्गायत्र्योस्तदेकस्या जगत्याः । अत एतदुक्तम् —**ये हि द्वे गायत्र्यौ, सैका जगती** इति । तथा—यौ द्वौ कौरवौ स एको बाहीक इति । एतच्च गायत्रीद्वयप्रशंसार्थं वचनम् । कथम् ? इदं श्रूयते—**द्वाभ्यां गायत्रीभ्यां वैश्यस्य**[3] इति । तद्वेतदयुक्तमिवोच्यते । जगत्या वैश्यस्य कार्यम् । **जागतो हि वैश्यः**[4] । तदेतद्द्वाभ्यां गायत्रीभ्यां क्रियते । जगत्यैव तत्कृतं भवति—**ये हि द्वे गायत्र्यौ सैका जगती** इति । तस्मादहेतुरयं संख्यार्थत्वे गायत्रीशब्दस्य ॥२२॥

---

गायत्र्यौ सैका जगती, उसका क्या परिहार है ? [परिहार] कहते हैं—[गायत्री] यह ऋचा का नामधेय औत्पत्तिक (नित्य[5]) है । अतः उत्पत्ति नामधेय होने से जो यह [गायत्री शब्द] जगती के अवयवभूत चौबीस अक्षरों के पद समुदाय में प्रयोग है वह भक्ति से जानना चाहिये । एक शब्द की अनेकार्थता न्याय्य नहीं है । किस भक्ति से [प्रयुक्त] है ? परिमाण सामान्य से । जो अक्षर परिमाण दो गायत्रियों का होता है वही एक जगती का है । इसी से यह कहा है— ये हि द्वे गायत्र्यौ सैका जगती । तथा—जो दो कौरव है वह एक बाहीक है । यह यौ द्वौ आदि वचन दो गायत्री की प्रशंसार्थ है । कैसे ? यह सुना जाता है—द्वाभ्यां गायत्रीभ्यां वैश्यस्य (=दो गायत्री से वैश्य का [अग्निचयन में अग्नि का आधान करे]) । यह अयुक्त के समान कहा जाता है ! जगती ऋचा से [वैश्य का आधान] करना चाहिये । क्योंकि जागतो हि वैश्यः (=वैश्य जागत है=जगती से सम्बद्ध है) । यह (=जागतत्व) दो गायत्रियों से किया जाता है । जगती से ही वह किया हुआ होता है—ये हि द्वे गायत्र्यौ सैका जगती वचन से । इसलिये यह हेतु नहीं है गायत्री शब्द के संख्यार्थत्व में ॥२२॥

**विवरण—यौ द्वौ कौरवौ स एको बाहीकः**—इसका ठीक तात्पर्य हमारी समझ में नहीं आया । हमारे विचारानुसार इसका तात्पर्य यह है कि कौरव कुल की अर्थात् सोम (=चन्द्र) वंश की चक्रवर्तीसुहोत्र पर्यन्त राजधानी प्रतिष्ठानपुर (प्रयाग) थी । सुहोत्र के पुत्र हस्ती ने गङ्गा के किनारे हस्तिनापुर वसाया था ।[6] तब से चान्द्रवंश की राजधानी हस्तिनापुर हुई ।

---

१. 'भाक्तः' इति पाठान्तरम् ।

२. मी० भाष्ये १।३।३ इत्येवमनेकत्र उक्तम्—'अन्याय्यश्चानेकार्थत्वम्' इति वचनमत्रानुसन्धेयम् ।

३. मै० सं० ३।२।२॥

४. अनुपलब्धमूलम् । द्र०—जागतो वै वैश्यः । ऐ० ब्रा० १।२८॥

५. द्र०—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः (मी० १।१।६) में कहा है—औत्पत्तिकमिति नित्यं ब्रूमः ।

६. पं० भगवद्दत्त कृत भारतवर्ष का बृहद् इतिहास भाग २, पृष्ठ ९६ ।

## वचनमिति चेत् ॥२३॥

शक्यं तावत् तत्रैतद्वक्तुं, यत्रानुवादो गायत्रीशब्दः। यत्र तु विधिस्तत्र कथम्? यथा—तिस्रोऽनुष्टुभः चतस्रो गायत्रीः करोति[1] इति। कः पुनर्विधौ विशेषः? विधौ शब्दार्थेन व्यवहारो भवति। तिस्रोऽनुष्टुभश्चतस्रो गायत्र्यो न शक्याः कर्तुम्। शक्यास्तु चतस्रश्चतुर्विंशतयः। तस्मात्तत्र संख्यायां गायत्रीशब्द इति ॥२३॥

अथ ब्रूमः—

---

प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः (मनु० १।२१) के अनुसार प्रयाग प्राग् देश के अन्तर्गत है। बाह्लीक नाम सतलज से लेकर सिन्ध नदी पर्यन्त भाग का है (महाभारत कर्ण० ४४।७)। तदनुसार इसका अर्थ लौकिक किंवदन्ती दो पुरबइये और एक पञ्जाबी के रूप में समझा जा सकता है। शारीरिक बल आदि की दृष्टि से प्रायः पञ्जाबी दो पुरबइये के बराबर आज भी देखा जाता है ॥२२॥

### वचनमिति चेत् ॥२३॥

सूत्रार्थः—लक्षणा से (वचनम्) विधि कैसे होगी (इति चेत्) ऐसा कहो तो।

व्याख्या—यह वहां कहा जा सकता है जहां गायत्री शब्द अनुवाद हो। जहां तो विधि है वहां कैसे होगा? जैसे तिस्रोऽनुष्टुभः चतस्रो गायत्रीः करोति (=तीन अनुष्टुभों [३२×३=९६] को चार गायत्रियां [२४×४=९६] बनाता है। विधि में क्या विशेषता है? विधि में शब्दार्थ से व्यवहार होता है। तीन अनुष्टुप् चार गायत्रियां नहीं बनाई जा सकतीं। चार चौबीस बनाये जा सकते हैं। इससे वहां संख्या में गायत्री शब्द है ॥२३॥

विवरण—यत्र तु विधिस्तत्र कथम्—इसका जो विधिपरक वचन उद्धृत किया है वह हमें नहीं मिला। तै० सं० ५।४।१२।१ में तिस्रोऽनुष्टुभश्चतस्रो गायत्रियः वचन मिलता है परन्तु वह विधिपरक नहीं है। विधौ शब्दार्थेन व्यवहारः—'शब्दार्थेन=अभिधावृत्त्या=मुख्यार्थेन।' विधि में लक्षणा नहीं होती, यह भाष्यकार ने मी० १।२।२९ के भाष्य में इस प्रकार कहा है—विधौ हि न परः शब्दार्थः प्रतीयते। न विधौ परः शब्दः इस रूप में यह न्याय मीमांसकों के अतिरिक्त शास्त्रकारों ने स्वीकार किया है। द्र०—मीमांसा कोष भाग ४, पृष्ठ २२९४ ॥२३॥

व्याख्या—इस विषय में कहते हैं—

---

१. अनुपलब्धमूलम्। द्र०—तिस्रोऽनुष्टुभश्च तिस्रो गायत्रियः। तै० सं० ५।४।१२।१॥

## यावदुक्तम् ॥२४॥

इहैवैकत्र संख्यार्थो नान्यत्र । क्वचिद् दर्शनात् । आह । यद्येवं न संख्यावचनः । कथमिह संख्यार्थो जात इति ? उच्यते । लक्षणयाऽपि विधानं भवति । तथा लोके—अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति । वेदेऽपि—पृष्ठैरुपतिष्ठते[1] इति । न[2] च तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्ट इत्यन्यत्रापि प्रतिकृतिवचनो विज्ञायते । पृष्ठशब्दो वा पृष्ठसाधनमन्त्रवचनः[3] । न च लक्षणया प्रयोगे शब्दार्थः परिच्छिद्यते । यत्कारणं, स्वार्थ एव वर्तमानोऽर्थान्तरं लक्षयति । स्वार्थं जहन्नेव लक्षयेत् । तस्मादयमप्यहेतुः ॥२४॥

---

### यावदुक्तम् ॥२४॥

सूत्रार्थः—(यावदुक्तम्) अभिधा लक्षणा आदि जितनी वृत्तियां हैं उनसे विधान किया जाता है ।

विशेष—सुबोधिनी वृत्ति में यही सूत्र पाठ है और अर्थ भी उसी के अनुसार दर्शाया है । कुतूहलवृत्ति में वचनमिति चेत् पूर्व सूत्रपाठ के अनन्तर यावदर्थमिहैवैकत्र संख्यार्थो नान्यत्र क्वचिद् दर्शनात् सूत्रपाठ मुद्रित है । यह पाठ भाष्य में देखा जाता है ।

व्याख्या—यहां एक स्थान पर संख्यार्थ है, अन्यत्र नहीं है । क्वचिद् दर्शन होने से । (आक्षेप) यदि इस प्रकार [गायत्री शब्द] संख्या को कहनेवाला नहीं है तो कैसे यहां संख्यार्थवाला हो गया ? (समाधान) लक्षणा से भी विधान होता है । जैसे लोक में—ये आटे के पिण्ड सिंह बनाए जायें । अर्थात् इन आटे के पिण्डों को सिंहाकृति दो । वेद में भी—पृष्ठैरुपतिष्ठते (=पृष्ठों से उपस्थान करता है) । वहां ('पिष्टपिण्डाः सिंहाः क्रियन्ताम्' में) सिंह शब्द प्रतिकृतिवाचक देखा जाता है । इससे अन्यत्र ('वने सिंहाः प्रचरन्ति' में) भी प्रकृति वचन नहीं जाना जाता है, और पृष्ठ शब्द ('पृष्ठैः स्तुवते' में) पृष्ठ साधन मन्त्र वाचक है [तो वह अन्यत्र 'पृष्ठैः स्तुवते' में भी पृष्ठ साधन मन्त्र का वाचक नहीं होता है] । और लक्षणा से प्रयोग में शब्दार्थ का परिच्छेद (=परित्याग) नहीं होता है । इसका कारण है—स्वार्थ में ही वर्तमान होता हुआ अर्थान्तर को लक्षित करता है । स्वार्थ का त्याग करके [अन्य को] लक्षित नहीं करेगा । इससे यह भी हेतु नहीं है ॥२४॥

विवरण—न च तत्र सिंहशब्दः—'न च' का सम्बन्ध उत्तर वाक्य के साथ है न च अन्यत्रापि । व्याख्या में जो भाषार्थ किया है वह इसी के अनुसार है । पृष्ठशब्दो वा पृष्ठसाधन-

---

१. तं० सं० ५।५।८।१॥

२. 'न च' उत्तरान्वयी—'दृष्ट इति न च अन्यत्रापि' इत्येवं योजना कर्तव्या ।

३. अत्र मी० ७।३। अधि० १४। ३६ भाष्यं द्रष्टव्यम् ।

## अपूर्वे च विकल्पः स्याद् यदि संख्याविधानम्॥२५॥

अपूर्वे च दर्शपूर्णमासकर्मणि विकल्पः स्यात्, यदि संख्यायां गायत्रीशब्दः। तत्र हि श्रूयते—**गायत्र्या परिदध्याद्**[1] इति। एवं श्रुते, 'आजुहोतायाश्चतुर्विंशत्यक्षरस्य पदसंचयस्य च विकल्पः स्यात्। विकल्पे पक्ष आजुहोताया बाधः। स चायुक्तः सत्यां गतौ। तस्मादपि नैतत् संख्याविधानम् ॥२५॥

---

मन्त्रवचनः—'पृष्ठैरुपतिष्ठते' में पृष्ठ स्तोत्र साधन मन्त्र को कहता है इसलिये 'पृष्ठैः स्तुवते' में भी पृष्ठ स्तोत्र साधन मन्त्र का वाचक नहीं होगा। मीमांसा ७।३। अधि० १७ का ३५वां सूत्र पूर्वपक्ष का है। ३६वें सूत्र के भाष्य में पृष्ठ शब्द की पृष्ठसाधनभूत मन्त्रवचनों का विस्तार से वर्णन किया है। परन्तु वहां उपतिष्ठन्ते में उपान्मन्त्रकरणे (अष्टा० १।३।२५) से मन्त्रकरण में विहित आत्मनेपद का आश्रय लिया है और यहां लक्षणा का यह भेद है। स्वार्थं जहन्नैव लक्षयेत् —यह नियम अजहत् स्वार्था लक्षणा के विषय में है। जहत्स्वार्था लक्षणा में स्वार्थ को छोड़कर ही अर्थान्तिर को लक्षित करता है। द्र०—साहित्यदर्पण, परि० २, तथा महाभाष्य १।१।१९; २।१।१॥ ॥२४॥

### अपूर्वे च विकल्पः स्याद् यदि संख्याभिधानम् ॥२५॥

**सूत्रार्थः—(अपूर्वे)** अपूर्व दर्शपूर्णमास कर्म के गायत्र्या परिदध्यात् में (विकल्पः) विकल्प (च) भी (स्यात्) प्राप्त होवे (यदि) यदि गायत्री शब्द (संख्याभिधानम्) संख्या का अभिधायक होवे।

व्याख्या—अपूर्व दर्शपूर्णमास कर्म में विकल्प होवे, यदि संख्या में गायत्री शब्द होवे अर्थात् गायत्री शब्द २४ संख्या का वाचक होवे। वहां सुना जाता है—गायत्र्या परिदध्यात् (=गायत्री से सामिधेनियों की समाप्ति करे)। ऐसा सुनने पर आजुहोत[दुवस्यत] इस चतुर्विंशत्यक्षर पदसमुदाय का विकल्प होवे। विकल्प पक्ष में आजुहोत[2] ऋचा का बाध होवे। वह अयुक्त है ज्ञान होने पर। इससे भी यह [गायत्र्या परिदध्यात्] में गायत्री से संख्या का विधान नहीं है ॥२५॥

---

१. गायत्रिया परिदध्यात्। तै० सं० २।५।१०॥

२. तै० ब्राह्मणे (३।५।२) 'आजुहोत दुवस्यत' सामिधेनी पठिता। ऋग्वेदे (५।२८।६) 'आजुहोता दुवस्यत' इति पाठः। तत्र छान्दसं दीर्घत्वम्।

३. तै० ब्रा० ३।५।२ में 'आजुहोत दुवस्यत' पाठ है। ऋग्वेद ५।२८।६ में 'आजुहोता दुवस्यत' पाठ है। यहां छान्दस दीर्घत्व है। भाष्य में 'अजुहोतायाः' पाठ में 'आजुहोत' प्रतीक में ऋक्त्व के कारण स्त्रीलिङ्गविषयक यप् जानना चाहिये। पञ्चदश सामिधेनियों में 'आजुहोत दुवस्यत' अन्तिम है।

अत्रोच्यते—

ऋग्गुणत्वान्नेति चेत् ॥२६॥

न प्रकृतौ विकल्पो भविष्यति । कुतः ? ऋग्गुणत्वात् । ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः । ऋचस्तस्य सामिधेन्य आम्नाताः । यदि, अनृचा परिदधीत, ऋग्गुणत्वं बाध्येत । तस्मात्तत्राऽऽजुहोतयैव परिधास्यति । तथा सति गायत्र्या परिहितं भविष्यति । ऋग्गुणत्वं चोपसंगृहीतम्[3] ॥२६॥

तथा पूर्ववति स्यात् ॥२७॥

---

विवरण — गायत्र्या परिदध्यात् —गायत्रीछन्दस्क ऋचा से सामिधेनियों की परिसमाप्ति करे। वह गायत्रीछन्दस्क आजुहोत दुवस्यत मन्त्र तै० ब्रा० ३।५।२ में निर्दिष्ट है। यदि गायत्री शब्द २४ संख्या का वाची होवे तो साक्षात् विधान सामर्थ्य से आजुहोत दुवस्यत मन्त्र प्राप्त होवे और २४ संख्या वाचक गायत्री शब्द को मानने पर किसी भी ऋचा के २४ अक्षर समुदाय प्राप्त होगा। इस प्रकार विकल्प होने पर पक्ष में आजुहोत ऋचा की बाधा प्राप्त होगी। परन्तु आजुहोत गायत्री ऋचा के नित्यवत् ज्ञान होने पर पक्ष में बाधा अनुचित है ॥२५॥

व्याख्या—इस (=विकल्प के) विषय में कहते हैं—

ऋग्गुणत्वान्नेति चेत् ॥२६॥

सूत्रार्थः—दर्शपूर्णमास में सामिधेनियों में ऋचाएं ही पठित हैं। अतः (ऋग्गुणत्वात्) दर्शपूर्णमास के ऋक् गुणवाला होने से गायत्री शब्द से आजुहोत ऋक् ही ली जायेगी, किसी अन्य ऋचा के २४ अक्षर नहीं लिये जायेंगे। अतः विकल्प प्राप्त नहीं होगा ऐसा होवे तो।

व्याख्या—प्रकृति में विकल्प नहीं होगा। किस हेतु से ? ऋग्गुणत्व से। ऋक् गुण वाला ही वहां (=प्रकृति में) प्रयोग स्वीकार किया है। वहां ऋचाएं सामिधेनी संज्ञक पठित हैं। यदि अनृक् (=किन्हीं २४ अक्षरों के समुदाय) से परिहित (=समाप्ति) होवे तो [सामिधेनियों का] ऋग्गुणत्व बाधित होवे। इसलिये वहां आजुहोत ऋचा से ही समाप्ति होगी। ऐसा होने पर 'गायत्री से समाप्ति' उपपन्न होगी और ऋग्गुणत्व भी संगृहीत होगा ॥२६॥

तथा पूर्ववति स्यात् ॥२७॥

सूत्रार्थः—(तथा) दर्शपूर्णमास के समान (पूर्ववति) बृहस्पति सव के 'गायत्रमेतत् तदहर्भवति' में भी बृहस्पति सव की प्रकृतिभूत अग्निष्टोम के ऋग्गुणवाला होने से वहां भी गायत्री

---

३. 'उपमृहीतं'—पाठान्तरम्।

पूर्ववत्यपि बृहस्पतिसवे तथा स्यात्, यथाऽपूर्वे। अत्रापि ऋग्गुणकः प्रयोगोऽङ्गीकृतश्चोदकेन। तत्रापि ऋक्षूपादीयमानासु गायत्रं चैवाहः कृतं भवति। ऋग्गुणकत्वं च न बाधितम्। तस्मान्नाक्षरावलोपः ॥२७॥

## गुणावेशश्च सर्वत्र ॥२८॥

तुशब्दस्य स्थाने चशब्दः। दृष्टश्च तुशब्दस्यार्थे चशब्दः। यथा, किंचेह भवतीति। गुणस्य चतुर्विंशतिसंख्यायाः सर्वत्राऽऽवेशः कृत्स्नायामाजुहोतायां, नाव-

---

ऋचाओं का ही ग्रहण (स्यात्) होवे। अर्थात् २४ संख्या अर्थ मानकर पूर्वपक्षी ने जो ऋगक्षर लोप कहा है वह न होवे।

व्याख्या—पूर्ववान् (=पूर्व उक्त) बृहस्पति सव में भी उसी प्रकार (=दर्शपूर्णमास के समान) होवे, जैसा अपूर्व में (=जिसकी कोई पूर्व प्रकृति नहीं है उस दर्शपूर्णमास में ऋग्गुणत्व से गायत्री का २४ संख्या अर्थ नहीं है)। यहां (=बृहस्पति सव में) भी ऋग्गुणवाला ही प्रयोग चोदकवचन से स्वीकृत (=स्वीकार किया गया) है। वहां (='गायत्रमेतदहर्भवति' में) भी ऋचाओं के उपादीयमान (=गृहीत) होने से गायत्र ही वह दिन किया जाता है। और ऋग्गुणत्व भी बाधित नहीं होता। इससे [त्रिष्टुप् जगती के] अक्षरों का लोप नहीं होगा [दाशतयी से गायत्रीछन्दस्क ऋचाओं का आगम होगा] ॥२७॥

### गुणावेशश्च सर्वत्र ॥२८॥

सूत्रार्थः—भाष्यकार ने इस सूत्र का दो प्रकार से व्याख्यान किया है। प्रथम व्याख्यान में सूत्रस्थ 'च' शब्द को 'तु' के स्थान पर माना है। हम नीचे यथा भाष्य दोनों अर्थ दे रहे हैं—

१—(गुणावेशः) २४ संख्या का आवेश=निवेश (तु) तो (सर्वत्र) कृत्स्न 'आजुहोत' ऋक् में होता है उसके किसी अवयव में नहीं होता है। अतः 'आजुहोत' के ग्रहण में गायत्री शब्द से ऋक् और २४ संख्या दोनों गृहीत होती हैं।

२—यदि (गुणावेशः) गायत्रीशब्द गायत्रीगत २४ अक्षर संख्या को कहता है तो वह २४ संख्या रूप गुण (सर्वत्र) सभी २४ संख्या से संख्येय द्रव्यों का (च) भी गायत्री शब्द वाचक प्राप्त होता है।

व्याख्या—'तु' शब्द के स्थान में 'च' शब्द है। 'तु' शब्द के अर्थ में 'च' शब्द [लोक में] देखा गया है—किन्तु यहां यह होता है। २४ संख्या रूपी गुण की सर्वत्र कृत्स्न 'आजुहोत' ऋक् में आवेश (=समावेश) प्राप्त होता है अवयव में नहीं। अतः उस (='आजुहोत') का

यवे। अतस्तस्यामुपादीयमानायामृग्गुणत्वं चोपगृहीतं भवति, संख्या च। बृहस्पतिसवे पुनर्या ऋचश्चोदकेनाङ्गीकृताः, तासामवयवे चतुर्विंशतिसंख्या निविष्टा। तस्मिन्नुपादीयमान ऋग्गुणत्वमनुपात्तं भवति। प्रकृतिगायत्रीषु तूपात्तं भवति। तस्मान्न संख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणामागमः प्राप्नोति।

अपर आह। इदं तावदयं संख्यावादी प्रष्टव्यः। कस्मादक्षरगतायामेव संख्यायां भवानवस्थितो, न पुनरन्यसंख्येयगतायामपि, ग्रहगतायां चमसगतायां वा। यावताऽविशेषेण श्रुतं, गायत्रमेतदहर्भवतीति। एवं सति सर्वत्र गुणावेशः संख्यावेशः[1] प्राप्नोति॥२८॥

## निष्पन्नग्रहणान्नेति चेत्॥२९॥

स चेद् ब्रूयात्, यत्रायं निष्पन्नो गायत्रीशब्दः, प्रसिद्ध इत्यर्थः। तस्य ग्रहणं

---

ग्रहण करने पर ऋग्गुणत्व और संख्या दोनों उपगृहीत होते हैं, परन्तु बृहस्पति सव में जो (त्रिष्टुप् और जगती) ऋचाएं चोदक वचन से प्राप्त होती हैं उनके अवयव में २४ संख्या निविष्ट होती है (=रहती है)। उस (=२४ संख्या) के उपादान करने पर ऋग्गुणत्व गृहीत नहीं होता [क्योंकि त्रिष्टुप् (३६ अक्षर) और जगती (४८ अक्षर) के २४ अक्षरों में ऋक्त्वधर्म नहीं है।] प्रकृतिगत गायत्रियों में तो (=ऋग्गुणत्व और संख्या दोनों) गृहीत होते हैं। अतः संख्या को कहनेवाले गायत्री शब्द [के ग्रहण करने] में प्रकृतिभूत गायत्रियों का आगम प्राप्त नहीं होता है।

दूसरे आचार्य कहते हैं—पहले इस संख्यावादी से यह पूछो कि किस कारण [गायत्री शब्द की] अक्षरगत २४ संख्या अर्थ में ही अवस्थित है अर्थात् अक्षरगत २४ संख्या अर्थ तक ही क्यों सीमित है? अन्य संख्येय ग्रहगत वा चमसगत २४ संख्या में भी [गायत्री शब्द को] क्यों नहीं स्वीकार करते? जबकि यह (=गायत्री शब्द) सामान्यरूप से श्रुत है—गायत्रमेतदहर्भवति। ऐसा स्वीकार करने पर सर्वत्र गुणावेश=संख्या का आवेश प्राप्त होता है॥२८॥

## निष्पन्नग्रहणान्नेति चेत्॥२९॥

**सूत्रार्थः**—(निष्पन्नग्रहणात्) जहां यह गायत्री शब्द निष्पन्न=प्रसिद्ध है उसके ग्रहण के ही न्याय्य होने से (इति चेत्) ऐसा कहो तो।

**व्याख्या**—यदि वह (=गायत्री शब्द का अर्थ २४ संख्या मानने वाला) कहे—जहां (=जिस अर्थ में) यह (=गायत्री शब्द) निष्पन्न है अर्थात् प्रसिद्ध है। उसका ग्रहण न्याय्य

---

१. 'संख्यावेशः' इति क्वचिन्नास्ति।

न्याय्यम् । अयं चाक्षरगतायामेव संख्यायां प्रसिद्धो न सर्वत्र । तस्मान्न सर्वसंख्येयगतो गृह्यत इति ॥२९॥

स वक्तव्यः—

## तथेहापि स्यात् ॥३०॥

यथाऽक्षरगतायामेव संख्यायां दृष्टो नान्यत्र, एवमृक्ष्वेव दृष्टो नान्यस्मिंश्चतुर्विंशत्यक्षरे गद्ये वा । यथा चाक्षरेष्वेव दृष्ट इति नानक्षरे विज्ञायते । एवमृक्षु दृष्ट इति नानृक्षु विज्ञातुं न्याय्यः ॥३०॥

अत्राऽऽह । यद्यप्ययमृक्षु[1] गायत्रीशब्दः, एवमप्यक्षरावलोप एव कार्यः । किं कारणम् ? प्रकृत्युपबन्धनात् । चोदकेनात्र प्राकृतयस्त्रिष्टुब्जगत्यः प्रापिताः । ता इमा नोज्झिता भविष्यन्ति । गायत्रीशब्दश्च संख्यासामान्याच्छक्नोति तदवयवान्

---

है । यह (=गायत्री शब्द) अक्षरगत २४ संख्या में ही प्रसिद्ध है, सर्वत्र (=सब संख्येयों में) प्रसिद्ध नहीं है । इससे सब संख्येय गत [२४ संख्या अर्थ] गृहीत नहीं होता है ॥२९॥

व्याख्या—उससे कहना चाहिये—

## तथा इहापि स्यात् ॥३०॥

सूत्रार्थः—(तथा) जैसे गायत्री शब्द चतुर्विंशति अक्षरों के समुदाय में देखा गया, अन्यत्र=अन्य अर्थ में प्रयुक्त नहीं होता उसी प्रकार (इह) यहां (अपि) भी (स्यात्) होवे । अर्थात् ऋचाओं में देखा गया गायत्री शब्द अन्य अर्थ २४ संख्या से भिन्न अक्षर समुदाय में अथवा गद्य में प्रयुक्त न होवे ।

व्याख्या—जैसे [गायत्री शब्द] अक्षरगत २४ संख्या में ही दृष्ट अन्यत्र (=अन्य अर्थ में) प्रयुक्त नहीं होता, उसी प्रकार ऋचाओं में देखा गया [गायत्री शब्द] अन्य २४ संख्यावाले अक्षर समुदाय में वा गद्य में प्रयुक्त न होवे । जैसे अक्षरों में देखा गया अन्य अक्षर भिन्न में नहीं जाना जाता (=प्रयुक्त नहीं होता) इसी प्रकार ऋचाओं में देखा गया ऋक् भिन्न में [प्रयुक्त] जानना भी न्याय्य नहीं है ॥३०॥

व्याख्या—(आक्षेप) यद्यपि ऋचाओं में गायत्री शब्द है तो भी ['गायत्रमेतदहर्भवति' में प्रकृति से प्राप्त त्रिष्टुप् और जगती में] अक्षरों का लोप ही करना चाहिये । क्या कारण है ? प्रकृति का उपबन्ध होने से । चोदक वचन ने यहां प्रकृतिगत त्रिष्टुप् और जगती ऋचाएं प्राप्त कराई हैं । वे त्रिष्टुप् और जगतियां उज्झित (=त्यक्त) नहीं होंगीं । गायत्री शब्द भी [२४] संख्या सामान्य से उसके अवयवों को कह सकता है । इस प्रकार दोनों प्राकृत

---

१. 'यद्यप्यृक्षु' पाठान्तरम् ।

वक्तुम् । एवमुभौ विधी अनुगृहीतौ भविष्यतः—प्राकृतो वैकृतश्चेति ।

अत्र उत्तरं पठति ।

**यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धः स्यात् ॥३१॥**

यद्यविशये—असंशयेऽपि, गायत्रीषु विहितासु प्रकृत्युपबन्धनादगायत्र्यां गायत्रीशब्दः कल्प्यते, शरेष्वपि—शरमयं बर्हिर्भवति[1] इति कुशेषु शरशब्दः कल्पयितव्यः । कौशमेव बर्हिः कार्यम् । वक्तव्यो वा विशेषः ॥३१॥

---

और वैकृत विधियां अनुगृहीत होंगी ।

इस [आक्षेप] के अनन्तर [सूत्रकार] पढ़ते हैं—

**विवरण**—उपर्युक्त आक्षेप सूत्र से बहिर्भूत है । अतः भाष्यकार ने कहा है कि इस आक्षेप को ध्यान में रखकर सूत्रकार समाधान करते हैं ।

**यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छब्दान्तरेष्वपि प्रसिद्धः स्यात् ॥३१॥**

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्व सूत्र से बहिर्भूत आक्षेप की निवृत्ति के लिये है । (यदि) यदि (अविशये) विना संशय के भी विहित गायत्रियों में (प्रकृत्युपबन्धात्) प्रकृति के अनुग्रह से अगायत्रियों में गायत्री शब्दार्थरूप (नियमः) नियम स्वीकार किया जाये तो (शब्दान्तरेषु) शब्दान्तरों के विषय में (अपि) भी प्रकृत्युपबन्ध (प्रसिद्धः) प्रसिद्ध अर्थवाले बर्हि की कल्पना होवे ।

इसका भाव यह है कि ऋक् में प्रसिद्ध गायत्री शब्द के संशय के विना भी प्रकृति के अनुग्रह के लिये उससे प्राप्त त्रिष्टुप् और जगतियों में भी अक्षर लोप से गायत्री की कल्पना की तो अभिचार कर्म में उक्त शरमयं बर्हिर्भवति (=शरों का विकारभूत बर्हि=बर्हिस्थानीय होता है) में भी प्रकृति के अनुग्रह के लिये शरों के स्थान पर कुशारूप बर्हि से ही वेदि का आच्छादन करना होगा ।

**व्याख्या**—**यदि विना संशय के भी गायत्रियों के विहित होने पर भी प्रकृति के अनुग्रह से अगायत्रियों (=त्रिष्टुप् जगतियों) में भी गायत्री शब्द की कल्पना करते हैं तो शरों में भी शरमयं बर्हिर्भवति (=शरों के विकार बर्हिस्थानीय होते हैं) में कुशाओं में शरशब्द की कल्पना करनी चाहिये । कुशाओं को ही बर्हि बनाना चाहिये अर्थात् प्रकृति के अनुग्रह के लिये शरों को छोड़कर कुशाओं से ही वेदि का आस्तरण करना चाहिये । अथवा इसमें विशेष कहना चाहिये ॥३१॥**

**विवरण**—शरमयं बर्हिर्भवति यह विधि अभिचार कर्म में विहित है । शर नाम सरकण्डे

---

१. तै० संहितायां २।१।५।७ इत्यत्र 'शरमयं बर्हिः' अभिचारकर्मणि पठ्यते ।

दृष्टः प्रयोग इति चेत् ॥३२॥

अयं विशेषो दृष्टः । चतुर्विंशतिसंख्यायामक्षरगतायां गायत्रीशब्दस्य प्रयोगः—ये द्वे गायत्र्यौ सैका जगती इति । तेन शक्यते कल्पयितुम् ॥३२॥

तथा शरेष्वपि ॥३३॥

शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते—शरवणमेवेदं कुशवनमिति ॥३३॥

अत्रोच्यते—

भक्त्येति चेत् ॥३४॥

स तत्र शरशब्दो भाक्तः प्रयुज्यते । दीर्घत्वात् पृथुपत्रत्वात् सादृश्यवादोऽसौ,

---

का है, जिसका बाणों में उपयोग होता है । इस अभिचार कर्म की प्रकृति दर्शपौर्णमास में बर्हि (=कुशाओं) से वेदि का आस्तरण होता है अतः प्रकृति प्राप्त बर्हि के अनुग्रह के लिये शर शब्द की बर्हि अर्थ में कल्पना करनी होगी ॥३१॥

दृष्टः प्रयोग इति चेत् ॥३२॥

सूत्रार्थः—अक्षरगत २४ संख्या में गायत्री शब्द का (प्रयोगः) प्रयोग (दृष्टः) देखा गया है—ये द्वे गायत्री सैका जगती=जो चौबीस-चौबीस अक्षरों की दो गायत्रियां है वह ४८ अक्षर की एक जगती (इति चेत्) ऐसा कहो तो ।

व्याख्या—यह विशेष देखा गया है—अक्षरगत २४ संख्या में गायत्री शब्द का प्रयोग है—ये द्वे गायत्र्यौ सैका जगती । इससे [अक्षरगत २४ संख्या में गायत्री शब्द के प्रयोग की] कल्पना की जा सकती है ॥३२॥

तथा शरेष्वपि ॥३३॥

सूत्रार्थः—(तथा) उसी प्रकार (शरेषु) शरों में (अपि) भी जानना चाहिये । कुशाओं में शर शब्द का प्रयोग होता है ।

व्याख्या—शर शब्द का भी कुशों में प्रयोग देखा जाता है—शरों का वन ही यह कुशवन है अर्थात् यह कुशवन शरवण ही है ॥३३॥

व्याख्या—इस विषय में कहते हैं—

भक्त्या इति चेत् ॥३४॥

सूत्रार्थः—शर शब्द का कुशों में प्रयोग (भक्त्या) गौणी वृत्ति से होता है (इति चेत्) ऐसा कहो तो ।

व्याख्या—वहां (=कुशवन में शरवण प्रयोग में) वह शर शब्द भाक्त (=गौणी वृत्ति से) प्रयुक्त होता है । दीर्घत्व एवं स्थूल पत्रत्व के सादृश्य से यह शरवणमेवेदं कुशवनम्

शरवणमेवेदं कुशवनमिति। स्वार्थे वर्तमानः सादृश्यं गमयति । स्वार्थं जहत्कथं गमयेत्। तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेष्विति ॥३४॥

**तथेतरस्मिन् ॥३५॥**

तथेतरस्मिन्नपि, **ये द्वे गायत्र्यौ सैका जगती** इति भाक्त एव गायत्रीशब्द इत्युक्तम्। सोऽपि स्वार्थ एव वर्तमानस्तत्सदृशं गमयतीति, ऋक्ष्वेव प्रयुक्तो न संख्यायाम्। तस्मान्न संख्यायां गायत्रीशब्दः। अतो नाक्षरावलोपः कर्तव्यः ॥३५॥

**अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥३६॥**

अपि च त्रिष्टुब्जगतीनामेकदेशे वाक्यमपरिसमाप्तं भवति। न चापरि-

---

कहा जाता है। स्व अर्थ (=शरत्व) में वर्तमान सादृश्य को जताता है। स्वार्थ (=शरत्व) को छोड़कर सादृश्य को कैसे जनायेगा। इससे शरों में ही वहां शर शब्द का प्रयोग है न कि कुशों में ॥३४॥

**तथेतरस्मिन् ॥३५॥**

**सूत्रार्थः**—(तथा) उसी प्रकार (इतरस्मिन्) ये द्वे गायत्र्यौ सैका जगती में भी गायत्री शब्द का भाक्त प्रयोग है।

**व्याख्या**—इसी प्रकार इतर (=गायत्री के प्रयोग) में भी होगा। ये द्वे गायत्र्यौ सैका जगती में गायत्री शब्द भाक्त ही है यह कह चुके। यह (=गायत्री शब्द) भी स्वार्थ में ही वर्तमान होकर तत् सदृश अर्थ (=२४ अक्षर संख्या) को बोधित करता है, इससे [गायत्री शब्द] ऋचाओं में ही प्रयुक्त होता है, २४ संख्या में प्रयुक्त नहीं होता। इसलिये २४ संख्या में गायत्री शब्द नहीं है। इससे [त्रिष्टुप् जगती ऋचाओं के] अक्षरों का लोप नहीं करना चाहिये। अर्थात् गायत्रमेतदहर्भवति में प्रकृति से चोदक वचन द्वारा प्राप्त त्रिष्टुप् और जगतियों के क्रमशः १२ और २४ अक्षरों का लोप करके उन्हें गायत्री नहीं बना सकते। दाशतयी से गायत्रियों का आगम ही करना चाहिये ॥३५॥

**अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥३६॥**

**सूत्रार्थः**—त्रिष्टुप् और जगतियों में अक्षर लोप करके गायत्री बनाकर प्रयोग करने पर (अर्थस्य) अर्थ के (असमाप्तत्वात्) पूर्ण न होने से (च) भी (तासाम्) उनके (एकदेशे) एकदेश में गायत्री शब्द (न) नहीं (स्यात्) होवे।

**व्याख्या**—और भी—त्रिष्टुप् और जगतियों के एक देश में वाक्य परिमाप्त (=पूर्ण) नहीं होता है। अपरिसमाप्त वाक्यार्थ से कोई भी अर्थ नहीं कहा जाता है। अर्थ के अभिधान

समाप्तेन वाक्येनार्थः कश्चिदभिधीयते। अर्थाभिधानार्थश्च मन्त्रप्रयोगः। तत्र मन्त्रप्रयोग एवानर्थकः स्यात्। तस्मान्न तासां त्रिष्टुब्जगतीनामेकदेशे गायत्रीशब्दः स्यात्। तस्मादुत्पत्तिगायत्रीणामेव दाशतयीभ्य आगमः कर्तव्य इति ॥३६॥

**इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमस्याध्यायस्य तृतीयः पादः ॥**

———

(=कथन) के लिये ही कर्मों में मन्त्र का प्रयोग होता है। ऐसा होने पर मन्त्र प्रयोग ही अनर्थक हो जावे। इसलिये उन त्रिष्टुप् और जगतियों के एकदेश में गायत्री शब्द न होवे। इस कारण उत्पत्यवस्था में ही जो गायत्रियां हैं उनका ही दाशतयी (=ऋग्वेद) से आगम करना चाहिये ॥३६॥

विवरण—तच्चोदकेषु मन्त्राख्या (मी० २।१।३२) लक्षण द्वारा कर्मों में मन्त्रों का प्रयोग तत्तत् क्रियमाण कर्म को कहने के लिये ही होता है। यही बात एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाऽभिवदति (गोपथ २।२।६) में भी कही है। इसी का यहां अर्थाभिधानार्थं च मन्त्रप्रयोगः द्वारा भाष्यकार ने निर्देश किया है। इतना ही नहीं—अर्थरहित का प्रयोग कर्मों में नहीं होता है। यह भी तत्र मन्त्रप्रयोग एवानर्थकः स्यात् से कहा है। इससे प्रथम भाग के आरम्भ में लिखे गये श्रौत-यज्ञ-मीमांसा निबन्ध के काल्पनिक विनियोग प्रकरण में हमने जो लिखा हैं उसकी पुष्टि होती है। द्रष्टव्य—प्र० संस्क० पृष्ठ ११२-११५, द्वि० संस्क० पृष्ठ १२५-१२८) ॥३६॥

————

# अष्टमाध्याये चतुर्थः पादः

[दर्विहोमशब्दस्य कर्मनामधेयत्वाधिकरणम् ॥१॥]

यदेकया जुहुयात्,दर्विहोमं कुर्याद्[1] इति श्रूयते। अस्मिन् दर्विहोमशब्दे भवति संशयः—किं गुणविधिरुत कर्मनामधेयमिति ? किं प्राप्तम् ?

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥१॥ (उ०)

दर्विहोमो यज्ञाभिधानं, कर्मनामधेयमित्यर्थः। कुतः ? होमसंयोगात्। होम-शब्दोऽत्र श्रूयते। तत्प्रधानश्चायं समासः। दर्विशब्द उपसर्जनं, होमश्च कर्म। अथवा जुहुयादिति कर्मोच्यते। तेन समुच्चितो, यदेकया जुहुयाद् इति। तस्मात्

---

व्याख्या—यदेकया जुहुयात् दर्विहोमं कुर्यात् (=एक ऋचा से होम करे तो दर्विहोम करे)। इस दर्विहोम शब्द में सन्देह होता है—क्या यह गुणविधि है अथवा कर्मनाम-धेय है ? क्या प्राप्त होता है ?

विवरण—आहिताग्नि को यदि प्रवास करना पड़े तो वह वास्तोष्पते प्रतिजानीहि (तै० सं० ३।४।१०।१) और वास्तोष्पते शग्मया (तै० सं० ३।४।१०।१) से होम करे। यह होम शकट में दो बैलों में से एक बैल जोतकर करे। एक बैल के जोतने से 'प्रयास्यन्' स्थिति यथावत् उपपन्न होती है (द्र०—तै० सं० ३।४।१० सायणीय भाष्य)। यदि वास्तोष्पति देवता वाली एक ऋचा से होम करे तो दर्विहोम करे। दर्विहोम में दर्वि=कड़छी से होम किया जाता है। किं गुणविधिः—उक्त होम में दर्विरूप गुण का विधान है अथवा यह कर्म का नाम है।

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥१॥

सूत्रार्थः—(दर्विहोमः) दर्विहोम शब्द (यज्ञाभिधानम्) यज्ञ को कहनेवाला है, (होम-संयोगात्) होम के संयोग से।

व्याख्या—दर्विहोम शब्द यज्ञ को कहनेवाला है अर्थात् कर्म का नामधेय है। किस हेतु से ? होम के संयोग से। होम शब्द यहां सुना जाता है। उस (=होम) की प्रधानता वाला यह समास है। दर्वि उपसर्जन (=अप्रधान) है। होम कर्म है। अथवा जुहुयात् से कर्म कहा जाता है। उससे समुच्चित (=सम्बद्ध) यदेकया जुहुयात्। इसलिये यह कर्मनामधेय

---

१. तै० सं० ३।४।१०।४॥

कर्मनामधेयम् । स्थितं तावत्, ततोऽर्थान्तरं प्रक्रियते ॥१॥

---

[दर्विहोमशब्दस्य स्मार्तानां वैदिकानां च कर्मणां नामधेयताधिकरणम् ॥२॥]

यदा कर्मनामधेयं, तदा चिन्त्यते—किं लौकिकानां स्मार्तानां कर्मणामष्टकादीनां नामधेयं दर्विहोमशब्दः, उत सर्वेषामेव लौकिकानां वैदिकानां चेति ? किं प्राप्तम् ?

स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् ॥२॥ (पू०)

स लौकिकानां स्यात् । स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात् । कुतः ? कर्तुस्तदाख्यत्वात् । तेषां कर्ता, तेन दर्विहोमशब्देन समाख्यायते ।

---

है । अधिकरण यहां स्थित हो गया=रुक गया । अनन्तर अर्थान्तर आरम्भ करते हैं ॥१॥

विवरण—तत्प्रधानश्चायं समासः—दर्विहोम का विग्रह है—दर्व्या होमः=कड़छी से आहुति । यह तृतीया तत्पुरुष समास है । तत्पुरुष समास में उत्तरपद प्रधान होता है—उत्तरपदप्रधानस्तत्पुरुषः । होम के प्रधान होने से साधनभूत दर्वि उपसर्जन=अप्रधान है । अथवा जुहुयादिति कर्मोच्यते—पूर्व दर्विहोम शब्द के उत्तरपद होम से कर्म का विधान मानकर व्याख्या की है । यहां यदेकया जुहुयात् में 'जुहुयात्' से होमरूपी जो कर्म कहा गया है, उस होमरूपी कर्म का दर्विहोम नामधेय है क्योंकि यदेकया जुहुयात् और दर्विहोमं कुर्यात् दोनों परस्पर सम्बद्ध हैं ॥१॥

---

व्याख्या—जब [दर्विहोम शब्द] कर्म का नाम है, तब विचार किया जाता है—क्या लौकिक स्मार्त कर्म अष्टका आदि का नाम दर्विहोम है अथवा लौकिक और वैदिक दोनों का ? क्या प्राप्त होता है ?

स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् ॥२॥

सूत्रार्थः—(सः) वह दर्विहोम शब्द (लौकिकानाम्) लौकिक कर्मों का (स्यात्) होवे, (कर्तुः) [उन लौकिक कर्मों के] कर्त्ता की (तदाख्यत्वात्) उस (=दार्विहोमिक) नामवाला होने से ।

व्याख्या—वह (=दर्विहोम नाम) लौकिक कर्मों का होवे । वह दर्विहोम शब्द निश्चित रूप से लौकिक कर्मों का नामधेय होवे । किस हेतु से ? कर्त्ता के उस आख्या (=नाम) वाला होने से । उनका कर्त्ता दर्विहोम शब्द से कहा जाता है—शिनियों का दार्विहोमिक

शिनीनां दार्विहोमिको ब्राह्मण:, अम्बष्ठानां दार्विहोमिको ब्राह्मण इति । यश्च यत्करोति स तेनाऽऽख्यायते । यथा—लावक: पावक इति । यदि चाष्टकादीनां नामधेयमेतत्, ततस्तेषां कर्मणां कर्ता दार्विहोमिकसमाख्यामर्हतीति । तस्माल्लौकिकानां नामधेयम् ॥२॥

सर्वेषां वा दर्शनाद्वास्तुहोमे ॥३॥ (उ०)

सर्वेषां लौकिकानां वैदिकानां च नामधेयमेतत्,न लौकिकानामेव । कस्मात्? दर्शनाद् वास्तुहोमे । वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति—**यदेकया जुहुयाद् दर्विहोमं कुर्यात् । पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवतत्वाय**[1] इति ।

ननु विपरीतमेतद् दर्शनम्—**यदेकया जुहुयाद् दर्विहोमं कुर्यात्** । अदर्विहोमं

---

ब्राह्मण है, अम्बष्ठों का दार्विहोमिक ब्राह्मण है । जो जिस कर्म को करता है, उस [कर्म] से वह कहा जाता है । जैसे—लावक पाचक । यदि अष्टकादि [लौकिक कर्मों] का यह नामधेय है, तो उन कर्मों के करनेवाला दार्विहोमिक नाम के योग्य है । इससे लौकिक कर्मों का नामधेय है ॥२॥

**सर्वेषां वा दर्शनाद् वास्तुहोमे ॥३॥**

**सूत्रार्थ:**—(वा) 'वा' शब्द पूर्व उक्त पक्ष के निराकरण के लिये है । (सर्वेषाम्) सब लौकिक और वैदिक कर्मों का दर्विहोम नाम है । (वास्तुहोमे) वास्तोष्पति होम में (दर्शनात्) दिखाई पड़ने से ।

**विवरण—वास्तुहोमे**—यहां 'वास्तोष्पति होम' के लिये पदैकदेश न्याय से वास्तुहोम शब्द प्रयुक्त है । **पदेषु पदैकदेशान्** (महाभाष्य १।१।४५) यह पदैकदेश न्याय कहाता है ।

**व्याख्या**—सब लौकिक और वैदिक कर्मों का यह नामधेय है, केवल लौकिकों का ही नहीं । किस हेतु से ? वास्तुहोम में दिखाई पड़ने से । वैदिक वास्तुहोम (=वास्तोष्पति होम) में दर्विहोमत्व को श्रुति दर्शाती है - यदेकया जुहुयाद् दर्विहोमं कुर्यात् । पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवतत्वाय (=जो एक ऋचा से होम करे वह दर्विहोम करे पुरोनुवाक्या को पढ़कर याज्या से होम करता है वह सदेवतत्व=देवसम्मतत्व=देवयोग्यत्व के लिये होता है) ।

**विवरण—पुरोऽनुवाक्यामनूच्य याज्यया जुहोति**—'वास्तोष्पते प्रतिजागृहि' इस पुरोनुवाक्या को पढ़कर 'वास्तोष्पते शग्मया' याज्या से होम करता है । **सदेवतत्वाय**—भट्टभास्कर तै० सं० ३।४।१० में व्याख्या करता है—सदेवतत्वाय देवसंमितत्वाय देवयोग्यत्वायेत्यर्थ: ।

**व्याख्या**—(आक्षेप) यह दर्शन विपरीत है । जो एक से होम करे वह दर्विहोम

---

१. तै० सं० ३।४।१०।४॥

सन्तमित्यापद्यते। यदि दर्विहोम एवासौ, तत एकया द्वाभ्यां च हूयमानो दर्विहोम एव भवति। तत्रैतद् दर्शनं नोपपद्यते-**यदेकया जुहुयाद् दर्विहोमं कुर्याद्** इति। अत्रो-च्यते। यदि लौकिकानामेव नामधेयं न वैदिकानाम्। तत एकयाऽपि हूयमानोऽसौ नैव दर्विहोमो भवति, अलौकिकत्वात्, तत्रैतद् वचनं नोपपद्यते–**यदेकया जुहुयाद् दर्विहोमं कुर्याद्** इति। तस्माज्ज्ञापकमेवेदं वैदिकानां दर्विहोमत्वे। एवमपि ज्ञापक-मुक्तम्। कुतः प्राप्तिः? उच्यते—होमशब्दस्य सामान्याभिधायित्वात् प्राप्तिः। तस्माल्लौकिकवैदिकानां नामधेयमेतत् ॥३॥

---

**[दर्विहोमशब्दस्य होमनामधेयत्वाधिकरणम् ॥३॥]**

लौकिकानां वैदिकानां च नामधेयं दर्विहोमशब्द इति स्थितम्। इदानीं चिन्त्यते। किं यजतिचोदनानां जुहोतिचोदनानां च सर्वेषां नामधेयमुत जुहोति-चोदनानामेवेति। अविशेषात् सर्वेषामिति प्राप्ते, उच्यते—

**जुहोतिचोदनानां वा तत्संयोगात् ॥४॥ (उ०)**

---

करे। अदर्विहोम होते हुए को, यह प्राप्त होता है। यदि दर्विहोम ही है यह, इससे एक या दो ऋचा हूयमान दर्विहोम ही होता है। वहां यह दर्शन उपपन्न नहीं होता—यदेकया जुहुयाद् दर्विहोमं कुर्यात्। (समाधान) यदि [दर्विहोम] लौकिक कर्मों का ही नामधेय है वैदिकों का नहीं है, तो वह एक ऋचा से हूयमान भी दर्विहोम नहीं होता है अलौकिक होने से। उस स्थिति में यह वचन उपपन्न नहीं होता—यदेकया जुहुयाद् दर्विहोमं कुर्यात्। इससे यह ज्ञापक ही है वैदिक कर्मों के दर्विहोमत्व में। (आक्षेप) इस प्रकार भी ज्ञापक कहा है, प्राप्ति कहां से होगी? (समाधान) होमशब्द के सामान्य के अभिधायित्व होने से प्राप्ति है। इससे लौकिक वैदिक उभयविध कर्मों का दर्विहोम नाम है ॥३॥

---

व्याख्या—लौकिक और वैदिक कर्मों का दर्विहोम नामधेय है, [यहां प्रथम अधिकरण] स्थित हो गया (=रुक गया)। अब यह विचार किया जाता है कि क्या 'यजति' से कही गई विधियों में और 'जुहोति' से कही गई सबका दर्विहोम नामधेय है अथवा 'जुहोति' से कही गई विधियों का ही। विशेष न जाना जाने से सब चोदनाओं का दर्विहोम नाम है, ऐसा प्राप्त होने पर कहते हैं—

**जुहोतिचोदनानां वा तत्संयोगात् ॥४॥**

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्व उक्त पक्ष को निवृत्त करता है। (जुहोतिचोदनानाम्)

जुहोतीनां नामधेयं न यजतीनाम् । कुतः ? तत्संयोगात् । होमशब्दसंयोगात् । अयं होमशब्दो जुहोतेर्वाचको न यजतेः । यजतौ लक्षणया स्यात् । तस्माज्जुहोतिनामधेयम् ॥४॥

———

[दर्विहोमशब्दस्य गुणविधित्वनिराकरणाधिकरणम् ॥४॥]

स्थितादुत्तरमुच्यते—

**द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥५॥ (पू०)**

यदुक्तं कर्मनामधेयं दर्विहोम इति । तन्न । किं तर्हि ? गुणाभिधानं स्यात् । गुणविधिरित्यर्थः । कुतः ? द्रव्योपदेशात् । द्रव्योपदेशोऽवगम्यते—दर्व्या होमो दर्वि-

---

दर्विहोम शब्द 'जुहोति' से कही गई विधियों का ही नाम है (तत्संयोगात्) उस= होम शब्द के साथ संयोग होने से ।

**व्याख्या—जुहोतियों का ही नाम है यजतियों का नहीं । किस हेतु से ? उसके साथ संयोग होने से । होम शब्द के संयोग से । यह होम शब्द 'जुहोति' का ही वाचक है, न कि 'यजति' का । 'यजति' का वाचक मानने में लक्षणा से प्रयुक्त होगा । इस कारण 'जुहोति' चोदना का [दर्विहोम शब्द] नाम है ॥४॥**

**विवरण—जुहोतीनां नामधेयम्, न यजतीनाम्—इसका तात्पर्य यह है कि दर्विहोम शब्द जुहोति' से कही गई विधियों का ही नाम है, 'यजति' से कही गई विधियों का नाम नहीं है ॥४॥**

———

**व्याख्या—स्थित (=रुके) हुए अधिकरण से आगे कहते हैं—**

**द्रव्योपदेशाद् वा गुणाभिधानं स्यात् ॥५॥**

**सूत्रार्थः**—(वा) 'वा' शब्द पूर्व उक्त 'दर्विहोम शब्द कर्म का नाम है' की निवृत्ति करता है । (द्रव्योपदेशात्) दर्विरूप द्रव्य के उपदेश से (गुणाभिधानम्) 'दर्वि' रूप गुण का कथन (स्यात्) होवे ।

**व्याख्या—जो यह कहा कि दर्विहोम कर्म का नामधेय है, वह नहीं है । तो क्या है ? गुण का कथन होवे । अर्थात् यह गुणविधि है । किस हेतु से ? द्रव्य के उपदेश से । द्रव्य का उपदेश (=विधान) जाना जाता है— दर्वि से होम=दर्विहोम । इस प्रकार ये दर्वि और होम**

होम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यतः । तदस्माद् गुणविधिः ।।५।।

न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ।।६।। (उ०)

नायं गुणविधिर्युज्यते । किं कारणम् ? लौकिकानां तावदाचारगृहीता दर्विः —न्यग्बिलया मूलदण्डया दर्व्या जुहोति' इति । सा न विधातव्या । श्रौतानामप्यन्यानि होमार्थानि पात्राण्याम्नातानि । स्रुवेण जुहोति,' चमसेन जुहोति' इति । तैः सह दर्वेविकल्पः स्यात् । स चान्याय्यः । यत्कारणं, स्रुवादीनां' विधायकः शब्दोऽस्ति, स्रुवेण जुहोतीति । न तु दर्वेः । तत्र ह्यानुमानिको विधिशब्दः ।।६।।

---

शब्द प्रसिद्धि के अनुसार स्वीकृत होंगे । इससे यह गुणविधि है ।।५।।

न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ।।६।।

सूत्रार्थः—(न) यह गुणविधि नहीं है । (लौकिकानाम्) लौकिक अर्थात् स्मार्त कर्म करने हारों के (आचारग्रहणत्वात्) आचार=व्यवहार से दर्वि का ग्रहण होने से (च) और (शब्दवताम्) शब्द से विहित कर्मों के (अन्यार्थविधानात्)स्रुवादि अन्य पात्रों के विधान से ।

विवरण—लौकिक=स्मार्त कर्मों का प्रामाण्य कर्तृसामान्य=वैदिक और स्मार्त दोनों कर्मों का समानरूप से करने से स्मृत्युक्त आचार=व्यवहार आदि का प्रामाण्य होता है अर्थात् उनके कर्मों का प्रामाण्य 'कर्तृसामान्य' अनुमान से होता है, यह पूर्व (मी० १।३।२)में कह चुके हैं । आचार=व्यवहार गृहीत कर्मों की अपेक्षा श्रौत कर्म शब्दवान्=साक्षात् शब्द से विहित होने के कारण स्वतः प्रमाण माने जाते हैं ।

व्याख्या— यह गुणविधि है ऐसा कथन युक्त नहीं है । क्या कारण है ? लौकिक (=स्मार्त) कर्मों के करने हारों के आचार से (=व्यवहार) से गृहीत है दर्वि । नीचे बिलवाली मूल में दण्डवाली दर्वि से होम करता है । उसका [स्मार्त कर्म में] विधान करना उचित नहीं है । श्रौत कर्मों के अन्य होम के लिये पात्र कहे गये हैं—स्रुवेण जुहोति (स्रुव से होम करता है) चमसेन जुहोति (=चमस से होम करता है) । उन [श्रुतिविहित] पात्रों के साथ दर्वि का विकल्प होवे, यह भी अन्याय्य है । उसमें यह कारण है—स्रुवादि का विधान करनेवाला शब्द है– स्रुवेण जुहोति । दर्वि का विधान करनेवाला शब्द नहीं है । वहां विधायक शब्द आनुमानिक है ।।६।।

विवरण—स चान्याय्यः—स्रुवादियों का श्रुति से प्रत्यक्ष विधान है और दर्वि का स्मार्त कर्मों के करने हारों के आचार से आनुमानिक विधान है । अतः प्रत्यक्ष विहित स्रुवादि

---

१. अनुपलब्धमूलम् ।

२. अनुपलब्धमूलम् । द्र०—'स्रुवेण चतस्रो जुहोति दीक्षितत्वाय ।' तै० सं० ६।१।२।१।

३. आप० श्रौत ८।३।८।। ४. 'स्रुचादीनाम्' इत्यपपाठः क्वचित्, पूर्वत्राश्रवणात् ।

दर्शनाच्चान्यपात्रस्य ॥७॥

अन्यच्च पात्रं दर्विहोमे दृश्यते—भूतेभ्यस्त्वेत्यपूर्वां स्रुवमुद्गृह्णाति[1] इति। तस्मान्न गुणविधिः ॥७॥

अथोच्यते—अग्निहविषोः कार्ये दर्विर्भविष्यति। दर्वौ होमो दर्विहोमो, दर्व्या होमो दर्विहोम इति। तत्र ब्रूमः—

तथाऽग्निहविषोः ॥८॥

के साथ आनुमानिक दर्विविधान का विकल्प अन्याय्य है। तत्र ह्यानुमानिको विधिः—स्मार्त कर्मों और श्रौत कर्मों के समान कर्त्ता होने से, स्मार्त विधियां जो प्रत्यक्ष विहित नहीं हैं, का अनुमान किया जाता है (द्र०—मी० १।३।२)। इससे दर्वि की विधि आनुमानिक है। ६॥

दर्शनाच्चान्यपात्रस्य ॥७॥

सूत्रार्थः—(अन्यपात्रस्य) दर्वि के स्थान पर अन्य पात्र के (दर्शनात्) दर्शन से (च) भी दर्विहोम गुणविधि नहीं है।

व्याख्या—दर्विहोम में अन्य पात्र भी देखा जाता है—भूतेभ्यस्त्वेत्यपूर्वां स्रुवमुद्गृह्णाति (='भूतेभ्यस्त्वा' इस मन्त्र से स्रुव को ऊपर उठाता है)। इससे गुणविधि नहीं है ॥७॥

विवरण—स्रुवमुद्गृह्णाति—इसके स्थान में तै० सं० ६।२।८।२ में 'स्रुचमुद्गृह्णाति' पाठ है। कुतूहलवृत्तिकार ने लिखा है—भूतेभ्यस्त्वा से उत्तरवेदि के व्याघारण रूप दर्विहोम में अन्य (स्रुच्) पात्र के दर्शन से दर्विरूप गुणविधि नहीं है। इस व्याख्या के अनुसार तथा तै० सं० ६।२।८।२ में 'स्रुवं' के स्थान में 'स्रुचं' पाठ होने से भाष्य में भी स्रुचमुद्गृह्णाति पाठ ही युक्त प्रतीत होता है ॥७॥

व्याख्या—यदि यह कहते हो कि अग्नि और हवि के कार्य में दर्वि होगी अर्थात् दर्वि की विधि होगी। दर्वि में होम दर्विहोम [इस अर्थ के द्वारा अग्नि के स्थान में दर्विपात्र में होम प्राप्त होता है], अथवा दर्वि का होम दर्विहोम [इस अर्थ में होम साधनीभूत आज्यादि हवि के स्थान में दर्वि का ही अग्नि में प्रक्षेप होगा]। इस विषय में कहते हैं—

तथाऽग्निहविषोः ॥८॥

सूत्रार्थः—(तथा) जैसे स्रुव आदि के विशेष विधान में दर्विरूप गुणविधि नहीं होती उसी प्रकार (अग्निहविषोः) अग्नि और हवि के स्थान में भी दर्विरूप गुणविधि नहीं होती है।

विशेष—कुतूहलवृत्तिकार ने यहां पूर्व सूत्र से 'न' पद की अनुवृत्ति मानी है।

१. अनुपलब्धमूलम्। द्र०—'भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति। तै० सं० ६।२।८।२॥

तथाऽग्निहविषोरपि। यथा, पात्रकार्ये दर्विर्न युज्यते, तथाऽग्निहविषोः कार्येऽपि। तत्राप्याहवनीय आधारत्वेन विहितः—यदाहवनीये जुहोति[1] इति। अन्यच्च प्रदेयत्वेन पुरोडाशादि। तस्मादग्निहविषोरपि कार्ये न दर्वेर्निवेशः ॥८॥

उक्तश्चार्थसम्बन्धः ॥९॥

उक्तं चास्माभिरग्नेः कार्येऽन्यद्द्रव्यसमर्थम्। दहनपचनप्रकाशनकर्म, अग्नेः। न चैतत् कार्यमन्यद्द्रव्यं शक्नोति कर्तुमिति। तस्मान्नाग्निकार्ये दर्वेरुपदेशः। अतो न गुणविधिः। कर्मनामधेयमेव दर्विहोमशब्द इति ॥९॥

---

व्याख्या—उसी प्रकार अग्नि और हवि के कार्य में भी दर्वि नहीं होगी। जैसे पात्र के कार्य में दर्वि का योग नहीं होता है उसी प्रकार अग्नि और हवि के कार्य में भी दर्वि का योग नहीं होगा। वहां (=दर्विहोम में) भी आहवनीय अग्नि आधाररूप से विहित है—यदाहवनीये जुहोति (=जो आहवनीय में होम करता है)। और अन्य प्रदेय रूप से पुरोडाशादि विहित है। इससे अग्नि और हवि के कार्य में भी दर्वि का प्रवेश नहीं होगा ॥८॥

उक्तश्चार्थसम्बन्धः ॥९॥

सूत्रार्थः—(अर्थसम्बन्धः) अग्नि के प्रयोजन का सम्बन्ध (च) भी (उक्तः) श्रुति ने कह दिया है।

विवरण—अग्नि कार्य सम्बन्ध, यथा—गार्हपत्ये हवींषि श्रपयति (=गार्हपत्य में हवियों को पकाता है) दक्षिणाग्नावन्वाहार्यं पचति (=दक्षिणाग्नि में अन्वाहार्य को पकाता है)। अन्वाहार्य=चार ऋत्विजों के भोजन में पर्याप्त दक्षिणाग्नि में पकाया गया चावल अन्वाहार्य कहाता है। अनु=यज्ञ के अनन्तर भोजन के लिये हार्य=दिया जानेवाला ओदन।

व्याख्या—हमने कह दिया है अग्नि के कार्य में अन्य द्रव्य असमर्थ है। जलाना पकाना प्रकाश कर्म अग्नि के हैं। इन कार्यों को अन्य द्रव्य नहीं कर सकता। इससे भी अग्नि के कार्य में दर्वि का उपदेश (=गुणरूप विधान) नहीं हो सकता। इसलिये गुणविधि नहीं है। दर्विहोम कर्म का नाम ही है ॥९॥

---

१. द्र०—यदाहवनीये जुह्वति। तै० ब्रा० १।१।१०।५॥

## [दर्विहोमानामपूर्वताधिकरणम् ॥५॥]

दर्विहोमशब्दः कर्मनामधेयमित्युक्तम्। तत्र चिन्त्यते—किमपूर्वा दर्विहोमा उत कुतश्चिद् धर्मग्राहिण इति? किं प्राप्तम्? नापूर्वा इति। कुतः? इतिकर्तव्यताविधेः। अविहितेतिकर्तव्यताकं कर्म विहितेतिकर्तव्यताकाद्धर्मान् गृह्णातीत्युक्तम्। अविहितेतिकर्तव्यताकाश्चामी। तस्मात् पूर्ववन्त इति। यदेतदेवं, तदैतदापतति किंपूर्वा इति? अत्रोच्यते—

**तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥१०॥ (पू०)**

तस्मिन् खलु दर्विहोमे सोमः प्रवर्तेत। सौमिको विध्यन्तः स्यात्। कुतः? अव्यक्तत्वात्। अव्यक्तचोदनः[1] सोमः। अमी अपि चाव्यक्तचोदनाः—भिन्ने जुहोति[2] इति। अतश्चोदनासामान्यात् सौमिको विध्यन्त इति ॥१०॥

---

व्याख्या—दर्विहोम शब्द कर्म का नाम है, यह कह चुके। उस [नामधेय पक्ष] में विचार किया जाता है—क्या दर्विहोम अपूर्व हैं अथवा कहीं से धर्म को ग्रहण करनेवाले हैं? क्या प्राप्त होता है? अपूर्व नहीं हैं। किस हेतु से? इतिकर्तव्यता की विधि होने से। जिसके इतिकर्तव्यता रूप कर्म विहित नहीं है वह जिसकी कर्तव्यता रूप धर्म विहित हैं उनसे धर्मों को ग्रहण करता है, यह कह चुके हैं। ये दर्विहोम अविहित इतिकर्तव्यतावाले हैं। इससे ये पूर्ववान् हैं अर्थात् जिनकी इतिकर्तव्यता कही है उन पूर्व कर्तव्यतावाले हैं। जब यह इस प्रकार है, तब यह विचार उत्पन्न होता है—पूर्ववाले हैं अर्थात् किससे धर्मों को ग्रहण करनेवाले हैं। इस विषय में कहते हैं—

**तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥१०॥**

सूत्रार्थः—(तस्मिन्) उस=दर्विहोम में (सोमः) सौमिक विध्यन्त (प्रवर्तेत) प्रवृत्त होवे (अव्यक्तत्वात्) अव्यक्त चोदनावाला होने से अर्थात् स्व अङ्गत्वरूप से अविहित देवतावाला होने से [दर्विहोम और सोम दोनों का स्वाङ्गरूप से देवता का विधान नहीं है]।

व्याख्या—उस दर्विहोम में सोम प्रवृत्त होवे सौमिक विध्यन्त होवे। किस हेतु से? अव्यक्त होने से। अव्यक्त चोदनावाला सोम है। ये दर्विहोम भी अव्यक्त चोदनावाले हैं—भिन्ने जुहोति (=कपाल आदि के भेदन होने=टूटने पर होम करता है)। अतः चोदना सामान्य से [दर्विहोम में] सौमिक विध्यन्त होता है ॥१०॥

---

१. अव्यक्तचोदन इति अव्यक्तत्व च स्वाङ्गत्वेनाविहितदेवतात्वम्। सोमयागाङ्गत्वेन विहितदेवताया अभावात् सोमयागोऽव्यक्त इति कथ्यते।

२. अनुपलब्धमूलम्। द्र०—आप० श्रौत ९।१३।८॥

न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात् तन्त्रे तेन विप्रतिषेधात् ॥११॥ (उ०)

वाशब्दः पक्षं व्यावर्तयति। नात्र सौमिको विध्यन्तो न्याय्यः। किं कारणम्? स्वाहाकारेण संयोगात्। स्वाहाकारेण संयुक्ता दर्विहोमाः। पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा'[1] इति। किमतः ? वषट्कारस्य निर्देशात् तन्त्रे तेन च विप्रतिषेधः।

---

विवरण—सोमः प्रवर्तेत—यहां भवार्थक तद्धित के न होने पर भी ताद्धित अर्थ 'सौमिक' गृहीत होता है। निरुक्तकार यास्क ने २।५ में 'गो' शब्द के निर्वचन प्रसङ्ग में 'अथाप्यस्या ताद्धितेन कृत्स्नवन्निगमा भवन्ति (=इस 'गो' शब्द में तद्धित प्रत्यय बोधित ताद्धित अर्थ से कृत्स्नवत् जैसे तद्धित प्रत्ययान्त से अर्थ हो उसके समान विना तद्धित प्रत्यय के भी कहा जाता है) लिखकर 'गो' का गव्य=पयः अर्थ में, चर्म, श्लेष्मा, स्नायु और श्लेष्मा अर्थों में प्रयुक्त 'गो' शब्दवाले मन्त्र उद्धृत हैं। अव्यक्तचोदनः सोमः—याग का स्वरूप देवता द्रव्य और त्याग तीन से सम्बद्ध होता है—द्रव्यं देवता त्यागः (कात्या० श्रौत १।२।२)। जिस चोदना=विधि में द्रव्य वा देवता का निर्देश न होवे वह अव्यक्त चोदना कहाती है। सोमेन यजेत में द्रव्य का निर्देश है परन्तु देवता का निर्देश न होने से सोम अव्यक्त चोदनावाला कहाता है। इसी प्रकार कपाल के टूटने पर उसी का गार्हपत्य में होम होता है (द्र०—आप० ९।१३।८ रुद्रदत्त वृत्ति)। यहां भी देवता का निर्देश नहीं है ॥१०॥

न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात् तन्त्रे तेन विप्रतिषेधात् ॥११॥

सूत्रार्थः—(वा) 'वा' शब्द पूर्व उक्त पक्ष की निवृत्ति के लिये है। (स्वाहाकारेण संयोगात्) दर्विहोम का स्वाहाकार के साथ संयोग होने से (च) और (तन्त्रे) सौमिक तन्त्र में (वषट्कारस्य) वषट्कार का (निर्देशात्) निर्देश होने से (तेन) वषट्कार के साथ (विप्रतिषेधात्) विप्रतिषेध=विरोध होने से (न) सौमिक विध्यन्त नहीं है।

विशेष—विप्रतिषेध=विरोध समान विषय में होता है। स्वाहाकार और वषट्कार दोनों ही हवि के प्रदान के लिये प्रयुक्त होते हैं।

व्याख्या—'वा' शब्द पक्ष का व्यावर्तन (=निवर्तन) करता है। यहां सौमिक विध्यन्त न्याय्य नहीं है। क्या कारण है ? स्वाहाकार के साथ संयोग होने से। दर्विहोम स्वाहाकार से संयुक्त हैं—पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा। इससे क्या होता है ? वषट्कार का निर्देश होने से तन्त्र में उसके साथ विप्रतिषेध (=विरोध) होता है। सौमिक तन्त्र में वषट्-

---

१. तै० सं० १।८।१३।३; ७।१।१५।१॥

तन्त्रे च सौमिके वषट्कारो निर्दिष्टः। तेनास्य विप्रतिषेधः। उभयोः प्रदानार्थत्वात्[1]। यदि सौमिको विध्यन्तः, ततो वषट्कारेण भवितव्यम्। तत्रैतत् स्वाहाकाराम्नानमनर्थकं स्यात्। अथ विकल्पः क्रियते, तथाऽप्युभयोः पक्षे बाधः। अथ त्वपूर्वा दर्विहोमाः, नैष विरोधो भविष्यति। तस्मादपूर्वाः ॥११॥

## शब्दान्तरत्वात् ॥१२॥

शब्दान्तरं च यजतिशब्दाज्जुहोतिशब्दः। यजतिचोदनश्च सोमः। दर्विहोमाः पुनर्जुहोतिचोदनाः। चोदनासामान्येन च धर्मप्राप्तिरिष्यते। तस्मादप्ययुक्ता सौमिकी धर्मप्राप्तिः। नन्वव्यक्तत्वाच्चोदनासामान्यमुक्तम्। अत्रोच्यते। सामान्येऽव्यक्तत्वे, यजतिशब्दो विशेषलिङ्गम्। तेन यजिमतीष्वव्यक्तासु धर्मनियमः। यथा,

---

कार का निर्देश है। दोनों (=स्वाहाकार और वषट्कार) के प्रदान अर्थवाला होने से [अथवा - प्रदान के लिये प्रयोग होने से]। यदि सौमिक विध्यन्त होवे तो उससे [प्रदान के लिये] वषट्कार होना चाहिये। वहां (=दर्विहोम के मन्त्रों में) स्वाहाकार का पाठ अनर्थक होवे। यदि विकल्प किया जाये तो भी दोनों की पक्ष में बाधा होवे। अर्थात् स्वाहाकार का प्रयोग होने पर वषट्कार का प्रयोग न होवे और वषट्कार का प्रयोग होने पर स्वाहाकार का प्रयोग न होवे। और यदि दर्विहोम अपूर्व (=पूर्व विहित किसी विध्यन्त की अपेक्षा न करने वाले) होवें तो विरोध नहीं होगा। इससे दर्विहोम अपूर्व है ॥११॥

## शब्दान्तरत्वात् ॥१२॥

सूत्रार्थः—(शब्दान्तरत्वात्) यजति और जुहोति शब्द के भिन्न भिन्न होने से दर्विहोम में सौमिक विध्यन्त नहीं होगा।

व्याख्या—'यजति' शब्द से जुहोति' शब्द भिन्न है। सोम 'यजति' चोदनावाला है और दर्विहोम 'जुहोति' चोदनावाले हैं। चोदना-सामान्य से धर्म प्राप्ति इष्ट होती है। इससे भी सौमिकी धर्मप्राप्ति अयुक्त है। (आक्षेप) अव्यक्तत्वरूप चोदना सामान्य कहा है [उसका समाधान क्या होगा ?]। (समाधान) इस विषय में कहते हैं—सामान्य अव्यक्तत्व होने पर 'यजति' शब्द विशेष लिङ्ग है। इससे यजिमती (='यजति' चोदनावाली, अव्यक्त चोदनाओं में धर्म का नियम होता है। जैसे औषधरूप समान गुणत्व होने पर देवता के एकत्वरूप विशेष

---

१. द्र०—स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते। मी० ८।४।१६ सूत्रभाष्ये; वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते। मी० १०।८।२० सूत्रभाष्य उद्धृतः।

समान औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन सौर्यकर्मण्याग्नेयविध्यन्त' इति ।१२।

लिङ्गदर्शनाच्च ॥१३॥

लिङ्गदर्शनाच्चैतद् विज्ञायते, नात्र सौमिको विध्यन्त इति । औदुम्बरीहोमे हि स्वाहाकारं विधायाऽऽज्यविधिपरे वाक्ये दर्शयति—घृतेन द्यावापृथिवी आपृणेथामित्यन्तरा कर्णौ[2] जुहोति[3] । आ मूलादवस्रावयति । भूमिगते स्वाहा करोति[4] इति । यद्यत्र सौमिको विध्यन्तः स्याद् वषट्कारस्ततो भवेत्, न स्वाहाकारः ॥१३॥

---

लिङ्ग से सौर्य कर्म में आग्नेय याग का विध्यन्त होता है [द्रष्टव्य—मी० ८।१। अधि० १६, ऐकार्थ्याद्वा नियम्येत सूत्र २८] ॥१२॥

लिङ्गदर्शनाच्च ॥१३॥

सूत्रार्थः—(लिङ्गदर्शनात्) लिङ्गदर्शन से (च) भी यह विदित होता है कि दर्विहोमों में सौमिक विध्यन्त नहीं होता है । [लिङ्गदर्शनश्रुति भाष्य में देखें ।]

व्याख्या—लिङ्गदर्शन से यह जाना जाता है कि यहां सौमिक विध्यन्त नहीं होता है । औदुम्बरी के होम में स्वाहाकार का विधान करके अन्य विधिपरक वाक्य में दर्शाता है—घृतेन द्यावापृथिवी आपृणेथामित्यन्तरा कर्णौ जुहोति आमूलादवस्रावयति । भूमिगते स्वाहा करोति (='घृत से द्यावापृथिवी को तृप्त करता हूं' इस मन्त्र से औदुम्बरी के कानों के मध्य होम करता है । मूलपर्यन्त घृत का अवस्रावण करता है=चुआता है । घृत के भूमि को प्राप्त होने पर स्वाहा कहता है) । यदि यहां सौमिक विध्यन्त होवे तो स्वाहाकार न होवे ॥१३॥

विवरण—सोमयाग के सदोमण्डप में उदुम्बर=गूलर की शाखा गाड़ी जाती है । सामगान के समय औदुम्बरी पीठ से स्पर्श करते हुए सामगान किया जाता है—औदुम्बरीं स्पृष्ट्वोद्गायेत (मी० १।३।२ के भाष्य में उद्धृत) । इस औदुम्बरी शाखा को गाड़ने के पश्चात् घृतेन द्यावापृथिवी मन्त्र से कानों और शाखा के मध्य भाग में घृताहुति दी जाती है । घृत धारारूप में छोड़ना होता है जिससे मूल तक घृत पहुंच जावे । अन्तरा कर्णौ—वस्तुतः यहां भाष्य में

---

१. द्र०—ऐकार्थ्याद्वा नियम्येत । मी० ८।१।२८॥

२. 'कणा' इति काशिमुद्रितेऽपपाठः ।

३. मीमांसाभाष्ये १०।८।२१ 'आपृणेथामिति औदुम्बर्या विशाखे जुहोति' इति पाठान्तरेणोद्धृतः ।

४. द्र०—आप० श्रौत ११।१०।४॥ सत्या० श्रौत ७।७।१८=११, लाट्या० श्रौत १।७।७-९॥

## उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिलिङ्गदर्शनात् पशुवत् ॥१४॥ (पू०)

उद्धृत पाठ हमें उपलब्ध नहीं हुआ। आपस्तम्ब श्रौत ११।१०।४ में इस विधि का निर्देश है। वहां तस्या विशाखे हिरण्यं निधाय का अर्थ रुद्रदत्त ने तस्याः कर्णे हिरण्यं निधाय किया है। 'विशाखा' शब्द का अर्थ है—विगता शाखा अस्मात् स्थानात् अर्थात् औदुम्बरी शाखा के ऊपर के भाग में जहां से छोटी सी शाखा निकली हो उस स्थान पर सुवर्ण रखकर ऊपर घृत से होम करना होता है। जो ऊपर के भाग में छोटी शाखा निकली हुई होती है वह मानुष कर्ण के समान होने से कर्ण कही जाती है। कान भी ऊर्ध्व शरीर भाग से बाहर शाखा के समान ही निकले हुए हैं। सत्याषाढ श्रौत ७।७।१० में पाठ है—तस्याः कर्णे विशाखे वा हिरण्यं निधाय—यहां कर्ण और विशाख का भेद से निर्देश किया है। इसकी व्याख्या में गोपीनाथ भट्ट ने लिखा है—कर्णः क्षुद्रशाखामूलम्। विशिष्टा शाखा यस्मादवयवात् महती शाखा यस्मात् तादृशेऽवयवे। अर्थात्—कर्ण क्षुद्रशाखा के मूल में। विशाखा महती शाखा के मूल में। लाटचायन श्रौत १।७।७-९ में विशाखा में दो आहुतियों का विधान है। इस स्थिति में मीमांसा भाष्य में 'कर्णो' द्विवचन पाठ युक्त होता है। अन्यथा 'कर्णं' पाठ होना चाहिये। भूमिगते स्वाहा करोति—इसका तात्पर्य यह है कि घृतेन द्यावापृथिवी आपृणेथाम् मन्त्र का पाठ आरम्भ करते ही घृत का आस्रावण आरम्भ करे और जब घृत भूमि को प्राप्त हो जाये तब स्वाहा बोले। अर्थात् मन्त्र का पाठ विलम्बित वृत्ति से (धीरे से) करे जिससे घृत के भूमि तक पहुंचने तक मन्त्रपाठ होता रहे, अन्त में स्वाहाकार बोले। द्र०—सत्याषाढ श्रौत ७।७।१० की गोपीनाथ भट्ट की व्याख्या ॥१३॥

उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिलिङ्गदर्शनात् पशुवत् ॥१४॥

**सूत्रार्थः**—(तु) 'तु' शब्द पूर्व उक्त सिद्धान्त पक्ष 'दर्विहोम सोम से धर्म प्राप्त नहीं करते' की निवृत्ति के लिये है। (पुनः) 'पुनः' शब्द वाक्यालङ्कार में प्रयुक्त है। (स्वाहाकारः) 'स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविर्दीयते' वाक्यस्थ अनारभ्याधीत स्वाहाकार विधि पर्णमयी न्याय (मी० ३।६। अधि० १)से प्रकृति याग में वषट्कार का विधान होने से प्रवेश न पाकर (उत्तरार्थः) प्रकृति से भिन्न सोमयागस्थ औदुम्बरी होम के लिये है। (यथा) जैसे (साप्तदश्यम्) अनारभ्याधीत सामिधेनियों का सप्तदशत्व प्रकृति में पञ्चदशत्व के विधान से प्रवेश न पाकर विकृतियाग पश्वादि में समन्वित होता है (द्र०—मी० ३।६। अधि० २) उसी प्रकार स्वाहाकार विधि भी उत्तरार्थ है। इस प्रकार (प्रवृत्तिलिङ्गदर्शनात्) स्वाहाकार प्रवृत्ति लिङ्ग के दर्शन से (तत्र) स्वाहाकार में (अप्रतिषिद्धा) सौमिक धर्म की प्रवृत्ति अप्रतिषिद्ध है अर्थात्

लिङ्गदर्शनस्य परिहार उच्यते । तदुक्तम्, औदुम्बरीहोमे सिद्धवत् स्वाहाकारस्य दर्शनान्न सौमिको विध्यन्त इति । अत्र ब्रूमः—उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यम् । तद्यथा, साप्तदश्यमनारभ्याधीतम्—सप्तदश सामिधेनीरन्वाह[1] इति । अनारभ्यवादानां प्रकृत्यर्थत्वाद् दर्शपूर्णमासावागतम् । ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सद्विकृत्यर्थं जातम् । एवमयं स्वाहाकारोऽनारभ्याधीतः, स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते[2] इति । तेनैव न्यायेन प्रकृतिं निविविक्षुः सोमं दर्शपूर्णमासौ च । ततस्तथैव वषट्कारेणोपरुद्धस्तद्वर्जमन्यानि प्रदानान्युपसंक्रामति । तत्राविप्रतिषिद्धा सोमधर्मप्रवृत्तिः,पशुवत् । तद्यथा—पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते । वाचनिकत्वात् साप्तदश्यस्य । एवमिहापि वाचनिकत्वात् स्वाहाकारं प्रति लिङ्गदर्शनान्न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते । पुनःशब्दश्चानर्थकः । यथा किं पुनरिदमिति ॥१४॥

---

सौमिक धर्म का प्रतिषेध नहीं होता । (पशुवत्) जैसे पशु में सप्तदश सामिधेनियों की प्रवृत्ति से प्रकृति के प्रयाज अनुयाज धर्मों में प्रवृत्ति का विरोध नहीं होता उसी प्रकार स्वाहाकार के विधान होने पर भी दर्विहोम में सोम धर्म की प्रवृत्ति का विरोध नहीं होगा ।

व्याख्या—लिङ्गदर्शन का परिहार कहते हैं । जो कहा—औदुम्बरी होम में सिद्धवत् स्वाहाकार के दर्शन से सौमिक विध्यन्त नहीं है । इसमें कहते हैं—उत्तरार्थ स्वाहाकार है जैसे साप्तदश्य । यथा—अनारभ्य अधीत साप्तदश्य—सामधेनीरन्वाह (= सत्रह सामिधेनियां पढ़ता है) । अनारभ्यवादों के प्रकृत्यर्थक होने से दर्शपूर्णमास को [साप्तदश्य] प्राप्त हुआ । तदनन्तर प्राकरणिक पञ्चदशत्व से बाधित होकर विकृत्यर्थ के लिये हुआ [द्र०- मी० ३।६। अधि० २] । इसी प्रकार यह स्वाहाकार अनारभ्याधीत है—स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते । उसी न्याय से प्रकृति में निवेश की इच्छा से सोम और दर्शपूर्णमास को [प्राप्त हुआ] तदनन्तर उसी प्रकार वषट्कार से रोका गया उसको छोड़कर अन्य प्रदानों को संक्रमण करता है (= प्राप्त होता है) । वहां सोम धर्म प्रवृत्ति प्रतिषिद्ध नहीं है, पशु के समान । जैसे पशुयाग में साप्तदश्य श्रूयमाण होने पर वहां दार्शपौर्णमासिकी प्रवृत्ति प्रतिषिद्ध नहीं होती है साप्तदश्य के वाचनिक होने से । इसी प्रकार यहां भी वाचनिक होने से स्वाहाकार के प्रति लिङ्गदर्शन से सौमिक धर्मों की प्रवृत्ति प्रतिषिद्ध नहीं होती है । पुनः शब्द अनर्थक है । जैसे—किं पुनरिदम् में ॥१४॥

---

१. अनुपलब्धमूलम् । किञ्चिद् भेदेन मी० १०।८।२० सूत्रभाष्येऽप्युद्धृतः ।

२. अनुपलब्धमूलम् । द्र०—वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः—स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः । तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च । हन्तकारं मनुष्याः स्वधाकारं पितरः । शत० ब्रा० १४।८।९।१॥

